॥ अधुनाग्रंथकारःभगवतोनिर्दोषत्वसमर्थनायशुद्धिसौरभसर्वस्वमारभते । तत्रादौलोकनीत्यानिर्दोषत्वंसमर्थयते ॥महत्स्विति॥ गुणसारेषु गुणश्रेष्ठेषु महत्सु महापुरुषेषु दोषान्वेषणधी मुधा व्यर्था । मुधेत्युपलक्षणं । नरकहेतुतयानर्थदाच । यदा सत्सुविद्यमानस्यापीषद्दोषस्यदर्शनंनरकाद्यनर्थहेतुः । तदाकिमुवाच्यमवद्यगंधविधुरेहरौदोषानुदर्शनंमहतोनर्थस्यहेतुरितिभावः । तर्हिंयत्रगुणास्तत्रदोषाइतिन्यायस्यकागतिरितिचेत् भगवतिभग्नव्याप्तिकत्वाद्दुर्न्यायतैवगतिरित्याह ॥ अनंतगुणहृद्योपीति ॥ हरिः अनंतगुणहृद्योपि निरवद्यःकिंन भवत्येवेत्यर्थः । हरिरित्यनेन भगवतोनिर्दोषत्वेसकलदोषनिर्हरणसमर्थत्वरूपयुक्तिंसूचयति ॥१॥

महत्सुगुणसारेषुदोषान्वेषणधीर्मुधा ॥ अनंतगुणहृद्योपिनिरवद्योनकिंहरिः ॥ १ ॥
योसौलघीयसोदोषोनासौदोषोगरीयसः ॥ अपिसंहृत्यनिखिलमपवादीकिमच्युतः ॥ २ ॥
यद्भावितद्भवत्येवयदभाविनतद्भवेत् ॥ कल्पांतेतल्पकल्पंयत्पत्रमासीन्नपादपः ॥ ३ ॥

पुनरपिलोकनीत्यैव सकलजगत्संहारेपि हरेर्निर्लेपत्वमेवेतिसाधयति ॥ योसाविति ॥ लघीयस स्संप्रज्ञातसमाधिस्थयोगिनः योसौदोष स्संध्यापरित्यागादिः । असौ गरीयसः असंप्रज्ञातसमाधिस्थयोगिनः दोषोन । अल्पस्ययोदोष स्समहतोदोषोनेतियावत् । लोकेप्येवंचेत् अलौकिकोच्युतः नकर्मणालिप्यतेपापकेनेत्यादिश्रुतेः क्रूरकर्मकरणेपि पापलेपाख्यच्युतिरहितः निखिलंसंहृत्यापवादीकिं नैवेत्यर्थः । प्रत्युत सृजस्यवस्यत्सिनतत्रसज्जसइत्यादिनास्तुत्यएवेतिभावः । इदमपिपूर्वार्धोक्तलोकनीतेरुदाहरणं। एतेनैव रावणहननेनरामस्यब्रह्महत्यादिकमपि गर्भस्रावेणैवनिरस्तंवेदितव्यं ॥ २ ॥ नारायणस्याविनाशित्वं अनुत्पन्नत्वंच कैमु ॥ १३६ ॥

त्येनसाधयितुं नीत्यंतरमाह ॥ यद्भावीति ॥ यद्भावीत्यादिना पूर्वार्धोक्तनीतिद्वयस्याप्युदाहरणमाह ॥ कल्पांतइति॥ कल्पांते ब्रह्मकल्पांते ब्रह्मप्रलयइतियावत् । यद्यस्मा त्तल्पकल्पं हरेश्शय्यासमानं पत्रं वटपत्रमासीत् । इयंयद्भावीत्यस्योदाहरणं । पादपः वटवृक्षः नासीदितिसंबंधः । यदभावीत्यस्येदमुदाहरणं । एवंचास्यपत्रस्य पादपानपेक्षत्वादनुत्पन्नत्वं प्रलयेसत्त्वादविनाशित्वंचसूचितं । यदा पत्रस्याविनाशित्वादिकं तदा किमुवाच्यं पत्रशायिनोहरेरितिभावः ॥ ३ ॥ प्रकारांतरेणहरेरनुत्पन्नत्वंसाधयितुंनीतिमाह ॥ कृतिरिति ॥ यस्य कारणेविषये कृतिःप्रयत्नोन । तस्य कार्यंकुतोभवेत् नकुतोपि । कारणविषयकप्रयत्नमकु

कृतिर्नकारणेयस्यतस्यकार्यंकुतोभवेत् ॥ लयेसतःप्रागभावाभावान्नहिहरेर्भवः ॥ ४ ॥ नाभि
जन्माविधिस्तस्यक्रोधाज्जातस्त्रिलोचनः ॥ नारायणोमूलरूपीजातःकस्माद्विचार्यतां ॥ ५ ॥

र्वतःकार्यंचनेतिलोकनीतिः । हि यस्मादेवं तस्मा ल्लयेप्रलये सतःविद्यमानस्य नारायणस्य प्रागभावाभावात् प्रागभावाख्यकारणाभावात् भवःउत्पत्तिर्न । हरेरुत्पन्नत्वंवदता तदुत्पत्तिकारणीभूततत्प्रागभावेपिकृतिःकर्तव्या । साचोक्तरीत्याऽशक्यत्वेननास्तिचेत् उत्पत्तिकथनंव्याहतमितिभावः ॥ ४ ॥ हरेर्जन्माभावे सर्वजनसंप्रतिपन्नंयुक्त्यंतरंचाह ॥ नाभिजन्मेति ॥ तस्य हरेर्नाभिजन्माविधिः त्रिलोचनःक्रोधजन्मेति यस्यप्रसादजोब्रह्मारुद्रश्चक्रोधसंभवइतिभारतेप्रसिद्धः । मूलरूपीनारायणःकस्मात्पुरुषा ज्जातउत्पन्नः नकस्मादपि।विचार्यतां लोकेवेदेच। कृष्णरामादीनां वसुदेवादिभ्योजनिंवदन्नप्यज्ञोलोकः मूलरूपिणोनारायण

स्य नकस्यचित्सकाशाज्जनिंवदतीत्यतोमूलरूपीत्युक्तं । तस्यापिजनकोस्तिचेत् ब्रह्मादीनामिवलोकेवेदेचप्रसिद्धःस्यात् । सर्वत्राप्यप्रसिद्धस्यच शशविषाणवदभावएव जनकाभावाज्जनेरप्यभावइतिभावः ॥ ५ ॥ प्रलयेसतः प्रागभावाभावात् नजनिरित्युक्तं । अधुना प्रलयेसत्त्वेन जन्ममरणयोरुभयोरप्यभावःसिद्ध्यतीत्याह ॥ अतइति ॥ यद्यस्मा दीशितुर्नारायणस्य प्रलयेसत्त्वं कल्पांतेब्रह्मकल्पांते कल्पादौब्रह्मकल्पादौ प्रभोर्जन्मचेतिसंबंधः । अतः देहलीदीपः गृहस्यांतर्बहिःप्रकाशकदेहलीदीपोपमोभूत् । देहलीदीपवदुभयसाधकोभूदितिभावः । सर्वस्यलयेप्यलीनत्वात् सर्वोत्पत्तेःपूर्वंविद्यमानत्वाच्च हरेर्जन्ममरणाभावइतिफलितोर्थः

अतोभूद्देहलीदीपःप्रलयेसत्वमीशितुः ॥ कल्पांतेयह्यरुंधेकल्पादौजन्मचप्रभोः ॥ ६ ॥
पूर्णप्रवृत्तिरन्यार्थानवैपूर्त्यर्थमात्मनः ॥ तटाकोत्सिक्ततोयैःकिंतटाकस्यैवपूरणं ॥ ७ ॥
सुखस्यानंतरंदुःखंभ्रमोनप्रमयासह ॥ नहिपूर्णसुखज्ञानोदुःखभ्रांत्यवकाशवान् ॥ ८ ॥

॥ ६ ॥ जगत्सृष्ट्यादौप्रवर्तमानस्यापूर्णतास्यादित्याशंक्य परार्थंप्रवर्तमानस्यनापूर्तिरित्यत्रयुक्तिमाह ॥ पूर्णेति ॥ पूर्णस्य सदा परिपूर्णस्य । अन्यार्था लोकोपकारार्था । तत्रदृष्टांतः ॥ तटाकेति ॥ तटाकोत्सिक्तैः तटाकमापूर्योपरिनिस्सृतैः । पूरणंकिं? नैवेतिसंबंधः । यथापरिपूर्णतटाकोत्सिक्ततोयेनकेदारादीनामेवोपजीवनं तथापूर्णस्यहरेःप्रवृत्तिरन्येषांस्वर्गनरकमोक्षतमोरूपफलदानायेतिभावः ॥ ७ ॥ हरेर्निर्दुःखत्वंभ्रमरहितत्वंचयुक्त्यासाधयितुमाह ॥ सुखस्येति ॥ हियस्माद्दुःखं सुखस्यानंतरं नतुसुखेन

सह । सुखस्यानंतरंदुःखंदुःखस्यानंतरंसुखमितिवचनात् । यद्यपिपादेमेवेदना शिरसिसुखमित्यस्ति तथापियदवच्छेदेनयदासुखं तदवच्छेदेनतदानदुःखमितिनियमस्यनभंगः । भ्रमयासहनेतिसंबंधः । अत्रापियदंशेभ्रमी तदंशेनभ्रमइतिनियमोविवेक्तव्यः । तस्मात्पूर्णसुखज्ञानः पूर्णेसुखज्ञानेयस्येतिविग्रहः । ज्ञानपदेनसम्यग्ज्ञानमुच्यते । सर्वत्रसर्वदापूर्णसुखज्ञानवानित्यर्थः । दुःख भ्रांत्यवकाशवान् दुःखभ्रांत्योरवकाशवान्नेतिसंबंधः । भगवतिसुखसम्यग्ज्ञानयोःकदाप्यनपगमात् सुखादौच श्रुत्युक्तन्यायेन दुःखभ्रमयोरसंभवान्नतयोरवकाशः । विज्ञानमानंदंब्रह्मेत्यादिश्रुतेरितिभावः ॥ ८ ॥ हरेर्दुःखाद्यभावेयुक्त्यंतरंचाह ॥ प्राग्जन्मे

प्राग्जन्मार्जितदुष्कर्म दुःखमूलंध्रुवंनृणां ॥ नकर्मणावर्धतेयोनोकनीयान्कुतोस्यतत् ॥ ९ ॥
क्षुत्पिपासादि मर्त्यानामप्यामुक्तेर्नसर्वदा ॥ बृहच्छरीरःकिंभुंक्ते ब्रह्मांडंयस्यरोमसु ॥ १० ॥

ति ॥ नृणांप्राग्जन्मार्जितदुष्कर्म दुःखमूलं दुःखस्यमूलंकारणंध्रुवमित्यनेन पुण्येनपुण्यंलोकंनयति पापेनपापमित्यादिश्रुतिसि द्धतांसूचयति । दुःखपदेनभ्रमोप्युपलक्ष्यते । यःपरमात्मा कर्मणापुण्यकर्मणा नवर्धते कर्मणापापकर्मणाच कनीयान्नीचः दुःख भ्रांत्यादिनानीचतांप्राप्तइत्यर्थः । नो नभवति । अस्य नकर्मणावर्धतेनोकनीयानितिश्रुतेःपापलेपरहितस्यनारायणस्य तद्दुःख भ्रांत्यादिकं कुतः नकुतोपि । कारणाभावेकार्यस्याप्यभावादितिभावः ॥ ९ ॥ इदानींनवनीतभक्षणादिनाहरेःक्षुत्पिपासादिशं कामाभूदित्यत्रयुक्तिमाह ॥ क्षुत्पिपासादिति ॥ आमुक्तेर्मुक्तिपर्यंतं । मुक्त्यनंतरंमर्त्यानामपिनेत्यर्थः । नित्यमुक्तस्यनाराय

णस्यनेतिकिमुवक्तव्यमितिभावः । युक्त्यंतरंचाह ॥ बृहच्छरीरइति ॥ यस्यरोमसुब्रह्मांडंतिष्ठति । सःबृहच्छरीरः व्याप्तमहा मूर्तिर्नारायणः किंभुङ्क्ते नकिमपि । तदुदरपूरकपदार्थस्यकुत्राप्यभावात् । ब्रह्मांडाधारव्याप्तशरीरत्वस्यअसिद्धिशंकापरिहाराय बृहच्छरीरोविमिमानऋक्वाभिर्युवाकुमारःप्रत्येत्याहवमितिश्रुतौ प्रसिद्धबृहच्छरीरपदग्रहणमितिज्ञातव्यं । ननुतर्हि ततएवस्वयो ग्यान्नपानाद्यभावात्सर्वदाक्षुत्पिपासादीतिचेन्न । तथासतिशरीरकार्श्यादेरप्यावश्यकत्वेनश्रुत्युक्तबृहच्छरीरत्वस्यविशेषेणमिमान इतिविमिमानपदोक्तज्ञानातिशयस्य युवेत्युक्तयौवनस्य आहवंप्रत्येतीत्युक्तरणरंगधीरत्वस्य पूर्वार्धर्चोक्तनवतिपदोक्तप्रधानदेवता प्रवर्तकत्वस्य एकोदाधारभुवनानिविश्वा कोटिब्रह्मांडविग्रह इत्यादिश्रुतिस्मृत्युक्तब्रह्मांडावनशक्तेश्चायोगात् । अस्तुतर्हिमूलरू

**महान्हिरक्षकोल्पस्यमहांतंसनरक्षति ॥ उद्दधारमही(मेतां)मादौ वराहस्तंदधारकः ॥ ११ ॥**

पस्यहरेःक्षुत्पिपासाद्यभावः सूक्ष्मरूपस्यकृष्णस्यकथंतदभावइतिचेत् । न । विजृंभितवदनस्यतस्याप्युदरेयशोदया महीमहीधरा दिसकलजगतोदृष्टत्वेनबृहच्छरीरत्वापरिहारात् । अतोयत्किंचिदेतत् ॥ १० ॥ अधुनागरुडगमनाद्धरेरन्याधीनत्वशंकांनिवार यितुंयुक्तिमाह ॥ **महान्हीति** ॥ महान्कृष्णः अल्पस्यगरुडादेःरक्षकः सोल्पकोगरुडादि र्महांतंकृष्णं नरक्षतिहि । हीत्यनेनलो केप्यल्पकस्यैवमहदधीनत्वंप्रसिद्धमितिसूचयति । स्पष्टमंतरंगंदृष्टांतमाह ॥ उद्दधारेति ॥ वराहः एतांमहींउद्दधार जलमध्य निमग्नांउद्धृतवान् । तंवराहंकोदधार नकोपि । महत्तरमह्युद्धरणेऽन्यानपेक्षस्यकुतोन्यत्रतदपेक्षा किंतुगरुडादिषुकृपयैवतानारु

ह्यगच्छतीतिभावः । उपलक्षणमेतत् । अनंतब्रह्मांडधारकस्यचहरेःकोधारकइत्यपिद्रष्टव्यं ॥ ११ ॥ मूलरूपेदुःखाद्यभावंप्रसाध्यावताररूपेष्वपितंयुक्त्यासाधयितुमाह ॥ महांतइति ॥ कथां लोकेस्वचरितवर्णनरूपकथां कर्तुं विस्तृतांकर्तुं । यदायदाय थाचरितव्यं तथातथासंचरंतीत्यन्वयः । यथापुरुषःदुःखाभावेपिदुःखिवत् परनिरपेक्षत्वेपि सापेक्षवच्चजनसंग्रहायस्वात्मानंप्रदर्शयति । तथारामोपि सीताकृतेदुःखादिकंप्रदर्शितवान् । नतुवस्तुतोदुःखीतिभावः । तत्रहेतुः । कृष्णरूपेणानंतासनतः ब्राह्मणपुत्राऽऽनेतारामः नीताबलःकिल नीता रावणेननीता अबलासीतायस्यसः नीताबलःकिल । किलेत्यस्वरसे । पंचविंशतिकोटि

**महांतोहिकथांकर्तुंसंचरंतितथातथा ॥ अनंतासनतःपुत्राऽऽनेता नीताबलःकिल ॥ १२ ॥**
**मूलंयोवेत्तिकस्तस्यपत्रंसंदर्शयेत्तरोः ॥ यस्सर्वगोनसोयोगीतस्यदुःखप्रथावृथा ॥ १३ ॥**

योजनांतरितानंतासनतः घटिकामात्रेण एकाकितयाविप्रपुत्रानयनसमर्थस्य लीलयातीर्णसप्तसमुद्रासप्तद्वीपघनोदकाख्यमहासमुद्रस्यच शतयोजनाभ्यंतरितलंकाप्रदेशतः सीतानयनादेरशक्यतया दुःखकरणकपिसंग्रहणसेतुबंधनादिनिर्बंधःकथंसंभावितइतिभावः ॥ १२ ॥ रीत्यंतरेणापिहरेर्दुःखाभावमुपपादयति ॥ मूलमिति ॥ यस्तरोर्वृक्षस्यमूलंवेत्ति तस्य पत्रंकस्संदर्शयेदितिलौकिकाभाणकं। तद्वद्देवरामेपीतिभावेनोक्तं ॥ यइति ॥ यःरामः सर्वगः सर्वव्याप्तः सकथमयोगी सीतावियोगवान् । सर्वगत्वमूलंजानतःसीतावियोगाख्यतद्विपरीतपत्रप्रदर्शनंकथंशोभतइतिभावः । तस्यायोगरहितस्य यादुःखप्रथा सापिवृथा अवियोगाख्य

युक्ति-

॥ ४ ॥

मल्लिका शुद्धिसौ०

सुखमूलविरुद्धदुःखाख्यपत्रमपिनिर्मूलमेवेतिभावः । अनेनवियोगाभावसमर्थनेन परिच्छिन्नत्वदोषोपिपरिहृतइतिद्रष्टव्यं ॥१३॥ अस्मिन्नर्थेमूलभूतं मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलंप्रभोः । कुतोन्यथास्यूरमतःस्वआत्मन्सीताकृतानिव्यसनानीश्वरस्येतिवाक्यंपूर्वार्धेन उत्तरार्धेन नवैसआत्माऽऽत्मवतामधीश्वरोभुङ्क्तेहिदुःखंभगवान्वासुदेवः । नस्त्रीकृतंकश्मलमश्नुवीतनलक्ष्मणंचापिजहातिकर्हिचिदितिवाक्यंचार्थतस्संगृह्णाति ॥ सीतेति ॥ मर्त्येष्ववतारोमर्त्यावतारः । स्वेस्वतंत्रे । आत्मन् आत्मनि व्याप्तेस्वस्वरूपेरमतइतिसंबंधः । सीताकृतानिव्यसनानि वियोगादीनिकुतस्स्यु र्नकुतश्चिदित्यर्थः । आत्मवतांमनोजयवतां

सीताकृतानिव्यसनानीश्वरस्यकुतोस्यहि ॥ स्त्रीकृतंकश्मलंरामोनाश्नुवीतेतिचस्फुटं ॥
श्रीमद्भागवतेप्रोक्तंनिरवद्यस्ततःप्रभुः ॥१४॥ यत्पंचमशिरश्छेदोबबाधेपि कपालिनं ॥
तद्वधेप्यनघोयोंतेसकिंरक्षोवधेऽघवान् ॥ १५ ॥ ॥ ॥

अधीश्वरः सआत्मा परमात्मा दुःखंनभुङ्क्तेवै इत्यनेन निरनिष्टोनिरवद्यइतिश्रुतिप्रसिद्धिंसूचयति । स्त्रीकृतंकश्मलंनाश्नुवीत सीतानिमित्तंकश्मलं विलापादिकमित्यापातार्थः स्त्रीकृतंस्त्रीसंगाज्जातं कश्मलं रेतस्स्खलनादिरूपजुगुप्सामितितत्वार्थोपि कश्मलपदप्रयोगात् स्त्रीतिसामान्यपदप्रयोगाच्चलभ्यते । यस्मादितिभागवतेप्रोक्तंततइतिसंबंधः ॥ १४ ॥ विप्रजात्युत्पन्नरावणवधाद्रामस्यब्रह्महत्यादोषोभूदितिशंकांदूरीकर्तुमाह ॥ यत्पंचमेति ॥ यस्यचतुर्मुखस्य पंचमशिरश्छेदः कपालिनमपि श्रीमहादेवमपि ॥१३९॥

ब्रह्महत्यारूपेणबबाधे पीडयामास । तामेवपीडांप्रदर्शयितुंकपालीत्युक्तं । करस्थब्रह्मकपालमेवपीडासूचकमितिभावः । यःरामरूपीनारायणः अंतेब्रह्मप्रलये । तद्वधेपि तस्यब्रह्मणोवधेपि अनघः ब्रह्महत्याख्यदोषरहितः । सः रक्षोवधे रक्षोरूपब्राह्मणाभासवधे । अघवान्किं नैवेतिसंबंधः । एतेनैव ब्रह्महत्यापरिहारायलिंगप्रतिष्ठाकृतेत्येतदपिपरिहृतं । स्वब्रह्महत्यापरिहारासमर्थस्यशिवस्यपरब्रह्महत्यापरिहर्तृत्वस्यसुतरामयोगात् । किंतु सेतुंदृष्ट्वासमुद्रस्यब्रह्महत्यांव्यपोहतीतिस्मृत्या निरीक्षणमात्रेणब्रह्महत्यानिरसनसमर्थेतत्वसेतौ ममपितृवधनिमित्तमहाब्रह्महत्यापरिहारायनित्यंवसामीतिशिवेनप्रार्थितस्तत्रप्रतिष्ठापितवानित्येवयुक्तमितिभा

शक्तोपिराजाभृत्यस्यहस्तंसंगृह्यगच्छति ॥ स्वर्नीतगर्दभश्वादे र्लंका शंकास्पदंकिल ॥ १६ ॥
स्वयंभीरुर्गंभीरस्यस्वभावंभावयेत्स्ववत् ॥ नखभिन्नाब्जजांडस्यचिंताहंतासुरात्किल ॥ १७ ॥

वः ॥ १५ ॥ ननूक्तरीत्यारामःसमर्थश्चेत्कुतस्तर्हिसेतुमकरोदितिशंकांलोकनीत्यानिवारयति ॥ शक्तोपीति ॥ तथारामोपिलीलयासेतुंकृत्वातेनगतवानितिभावः । उत्तरार्धंतुतदनंगीकारबाधकत्वेनयोज्यं । गर्दभश्च श्वाच आदिर्येषांतेगर्दभश्वादयः । ते स्वः स्वर्गं नीतायेनसतथोक्तः । ब्रह्मलोकपर्यंतमनन्यापेक्षयासर्वप्राण्युन्नयनसमर्थस्यकथमत्रान्यापेक्षेतिभावः ॥ १६ ॥ सुग्रीवसख्यापेक्षणात्रामस्यरावणाद्भीरितिलोकवार्तांनीत्यापरिहरति ॥ स्वयंभीरुरिति ॥ भीरुर्भयशीलः । गंभीरस्य स्वाभीतेर्निगूहनाय भीरुनटनांकुर्वतःपुंसः स्वभावं स्ववत् स्वस्वभाववत् भावयते । भीरुरित्येवमन्यतइत्यर्थः । तत्कुत्रदृष्टमित्युक्तं ॥ नखभिन्नाब्ज

युक्ति- जांडस्येति ॥ नखेनभिन्नंअब्जजांडंब्रह्मांडंयेनसः । भूलोकेस्थित्वानखमात्रेणशतकोटियोजनप्रमाणसौवर्णब्रह्मांडखपरभेदनसम मल्लिका
र्थस्येत्यर्थः । असुरात् शतयोजनांतरितलंकास्थरावणात्चिंताकिं । हंताश्चर्यं । अतःपूर्वार्धोक्तनीतेरिदमेवोदाहरणमितिभावः शुद्धिसौ०
॥ ५ ॥ ॥ १७ ॥ इदानींकृष्णावतारस्यनिर्दोषतांसमर्थयते ॥ कुक्षाविति ॥ यस्यशिशोः । लक्ष्यंतेस्म अलक्ष्यंत । मात्राजृंभमाणे मुख
द्वारा अदृश्यंत । किलेतिपुराणप्रसिद्धिंद्योतयति । अस्यकृष्णस्ययुक्तिविन्मते जननंमरणंचनयुक्तमितियोजना । उदरस्थब्रह्मां
डस्योत्पत्तिंविनोत्पत्ते विंनाशंविनानाशस्ययुक्तिबाधितत्वात् । ब्रह्मांडोदरस्यतस्यसूक्ष्मतरमातृगर्भप्रवेशायोगाच्च । सामर्थ्यवि

कुक्षौयस्याखिलालोकालक्ष्यंतेस्मशिशोःकिल ॥ जननंमरणंचास्यनयुक्तंयुक्तिविन्मते ॥ १८ ॥
नहिकल्पांतसमयोयस्स्वर्गारोहणक्षणः ॥ नचकल्पादिकालोसौयत्रावातरदच्युतः ॥ १९ ॥

शेषात्घटतइतिचेत्तर्ह्येतादृशमहासमर्थस्यकथंजननमरणादिदोषोघटतइतिभावः ॥ १८ ॥ एतदेवविवेचयति ॥ नहीति ॥
कृष्णस्ययस्स्वर्गारोहणक्षणः सःकल्पांतसमयः ब्रह्मणश्शतवर्षावसानकालः । ब्रह्मप्रलयइतियावत् । नहीतिसंबंधः । यद्युदरस्थ
ब्रह्मांडस्यकृष्णदेहस्यस्वर्गारोहणकालेनाशस्स्या त्तर्ह्ययमेवब्रह्मप्रलयकालस्स्यादितिभावः । यत्रकालेऽच्युतःअवतारत्अवततार।
असौकालः कल्पादिकालः ब्रह्मसृष्टेरादिकालोनेतिसंबंधः । यदिकृष्णावतारकालेकृष्णस्योत्पत्तिस्स्यात् । तदोदरस्थब्रह्मांडस्या ॥ १४० ॥
प्युत्पत्त्यवश्यंभावेनाऽयमेवकल्पादिकालस्स्यात् । अतोजननमरणे नास्यशंकितुमपिशक्येइतिभावः ॥ १९ ॥ युक्त्यंतरेणकृ

ष्णस्योत्पत्तिंदूरीकरोति ॥ यदिति ॥ यत् विप्रांघ्रेः भृगुचरणस्यांकनं श्रीवत्सइतियावत् । वैकुंठस्थमूर्तेर्वक्षसितिष्ठतिहि । ही
त्यनेनपुराणप्रसिद्धिंद्योतयति । तदेव तच्छ्रीवत्सांकनमेव देवकीगर्भजातस्यवक्षसिकिल । किलेत्यनेन श्रीवत्सलक्ष्मंगलशोभि
कौस्तुभमितिवाक्यंस्मारयति ॥ २० ॥ अत स्तद्देहस्थितपादचिह्नस्यैतद्देहेपिविद्यमानत्वात् । मध्येदेवकीदेहंप्रविश्यगर्भस्थित
शिशोर्वक्षसिविप्रेणाकृतत्वादितिभावः । हीत्यनेन तदानींतनचिह्नस्येदानीमपिविद्यमानत्वे सएवायंभवेदितिलौकिकप्रसिद्धिंसूच

यद्विप्रांघ्र्यंकनंवैकुंठस्थमूर्तेर्हिवक्षसि ॥ तदेवदेवकीगर्भजातस्यकिलवक्षसि ॥ २० ॥
अतस्तदेवहिभवेदिदंरूपंनचापरं ॥ नचेत्कुप्यंतियोधानांकलाकुशलमंत्रिणः ॥ २१ ॥
प्रदर्श्यातप्ततपसामवितृप्तदृशांनृणां ॥ आदायांतरधाद्यस्तुस्वबिंबंलोकलोचनं ॥ २२ ॥
इतिभागवतेप्रोक्तामुद्धवोक्तिंनविस्मर ॥ विस्तरोस्यप्रमेयस्यकृष्णकाव्येप्रदृश्यताम् ॥ २३ ॥

यति । तदेवदर्शयति ॥ नचेदिति ॥ योधानांभटानां कलाकुशलमंत्रिणः कलानाम योधानामंगेविद्यमानव्रणाद्युपशमेसतिजा
तचिह्नंनीलिमादिकंच । तस्यांकुशलाः । तस्यांकलायांसत्यां सएवायंनोचेदन्योयमितिविवेचनेसमर्थाइत्यर्थः ॥ २१ ॥ कृष्णदे
हस्यनाशाभावेयुक्तिमूलीभूतांस्मृतिंचाह ॥ प्रदर्श्येति ॥ लोकानांलोचनानियस्मिन्तत् । स्वबिंबंस्वदेहं । अतप्ततपसां पुनः
पुनर्द्रष्टुंतप्ततपोरहितानां अवितृप्तदृशां अनंतलावण्यपूर्णत्वेनालंबुद्धिरहितनयनानां प्रदर्श्य स्वर्गारोहणपर्यंतंदर्शयित्वा । स्वर्गा

रोहणसमये तदेवबिंबमादाय अविमुच्येतियावत् । अंतरधात् अदृश्योभूदितिश्लोकार्थः । उद्धवोक्तिं साक्षात्कृष्णादेवश्रुतत
त्वस्योद्धवस्यवचनं । अस्य जननाभावस्य विस्तरः । तेनैववपुषाद्य वामिति अमुनावपुषानघेति उभयविधप्रत्यभिज्ञादियुक्ती
नांबाहुल्यं । कृष्णकाव्ये रुग्मिणीशविजये ॥ २२ ॥ २३ ॥ इदानींहरेश्छेदभेदाभावेयुक्तिमाह ॥ येपार्थेति ॥ येभटा भीष्मा
दयः सर्वशःसर्वे । पार्थरथसारथेःकृष्णस्य विश्वरूपे दृश्यमानेसतीतियावत् । रणात्पुरा युद्धारंभात्पूर्वमेव दशनाग्रेषु विश्वरूपस्य
हरेर्दंताग्रेषु विलग्नास्संहारायदंशनसमयेसंलग्नाः केचनचूर्णीभूतमस्तकादयश्चदृष्टाः पार्थेन । केचिद्विलग्नादंशनांतरेषुसंदृश्यंतेचू

येपार्थरथसूतस्यविश्वरूपेरणात्पुरा ॥ विलग्नादशनाग्रेषुचूर्णीभू
ताश्चसर्वशः ॥ दृष्टास्तच्छरवेगेनच्छेदोवेधःकथंप्रभोः ॥ २४ ॥

र्णितैरुत्तमांगैरित्यादिगीतावचनात्सिद्धोयमर्थः । तच्छरवेगेन तेषांचूर्णितानांदशनाग्रेणदष्टानां शरवेगेन प्रभोःकृष्णस्य छेदोवे
धःकथं । नकथंचित् । स्वयंप्रागेवतद्वदनग्रासतांप्राप्ताःकथंतमेवहरिंताडयेयुः । दिव्यंददामितेचक्षुःपश्यमेयोगमैश्वरमितिवच
नेना द्यप्रत्यक्षस्य दिव्यदृष्टिरूपतया बाधितुमशक्यत्वेना तादृशद्वितीयप्रत्यक्षमेवाज्ञदृष्टितयाबाध्यमितिभावः । एतेन प्रत्यक्षदृ
ष्टवेधादे र्विद्धवन्मुग्धवच्चैवेतिवचनमात्रेणकथंवाध्यत्वमितिशंकापरिहृता । उक्तरीत्या वेधाद्यभावस्य ततोपिप्रबलपार्थप्रत्यक्षसिद्ध
त्वात् । अतएव शितविशिखहतोविशीर्णदंशःक्षतजपरिप्लुतआततायिनोमेइत्यादिवाक्यानि मोहकवाक्यतयोपेक्षणीयानि । शित



विशिखा हतायेनसः । वि निषेधेपृथग्भावइतिवचना द्विशीर्णः अशीर्णःदंशःकवचोयस्यसः । एतेनविभिद्यमानत्वचीत्येतद्व्याख्या
तप्रायं । क्षतजपरिप्लुतः उभयपार्श्वेशरताडितभटांगस्रवत्क्षतजबिंदुभिःपरिप्लुतइत्यनुकूलार्थतयासंग्राह्याणिवा । विभिद्यमानत्व
चि विलसत्कवच इत्यनयोर्विरोधाच्चास्मदुक्तएवार्थः ॥ २४ ॥ छेदाभेदाद्यभावेयुक्त्यंतरमप्याह ॥ पिशाचेति ॥ यद्यस्मा न्मं
त्रेण स्तंभनमंत्रेण । धारा असिधारा नरान्नच्छिनत्तिहि । हीत्यनेनलोकप्रसिद्धिंसूचयति । तत्तस्मात्कारणाद्धरेश्छेदः शस्त्रादि
ना । श्रुतिप्रोक्तंयत्सार्वज्ञंतस्यच्छेदएव । अल्पज्ञोपिपिशाचादिःशक्तिविशेषाभिज्ञताया मंत्रविशेषाभिज्ञतायावा परांगमपिछेत्तुं

पिशाचाविष्टदेहेपिप्रायश्छेदोनदृश्यते ॥ मंत्रेणकुंठिताधारानच्छिनत्तिनरान्हियत् ॥ हरेश्छेदश्श्रुतिप्रोक्त
सार्वज्ञच्छेदएवतत् ॥२५॥ ब्रह्मांडखर्परच्छेदेयन्नखाग्रच्छिदापिन ॥ कोयुक्तिमांस्तस्यविष्णोश्छेदंसंभावये
च्छरैः ॥ २६॥ रोमश्छेदोजगच्छेदोयद्रोम्णिखिलंजगत् ॥ नियंतायोखिलच्छेत्तुःसच्छेद्यःकेनवावद ॥ २७॥

नमुंचति । हरेस्स्वांगस्यैवच्छेदे पिशाचादितोप्यकुशलत्वप्रसंगेनकथंनसार्वज्ञच्छेदइतिभावः ॥ २५ ॥ युक्त्यंतरंचाह ॥ ब्रह्मांडे
ति ॥ यस्यपरमात्मनःनखाग्रस्य घनतरब्रह्मांडेछिद्रंकुर्वतोनखाग्रस्य । गच्छतोहिनरस्यच्छेदयोग्यस्यक्षुद्रशिलाताडनादिनानख
च्छेदोदृश्यते । यस्यहरेर्नखाग्रं ब्रह्मांडकटाहच्छेदनेपिनाच्छिद्यत । तस्यहरेरंगेछेदादिकमसंभावितमितिभावः ॥ २६ ॥ पुनरपि
युक्तिद्वयमाह ॥ रोमच्छेदइति ॥ यद्यस्मा द्रोम्णि भगवतोरोम्णि निखिलंजगदस्ति । तत्तस्मा द्रोमच्छेदःकृष्णस्यरोमच्छेदो

जगच्छेदएव । एवंच रोम्णांछेदोपिनघटते किमुअंगस्येतिभावः । यःकृष्णः अखिलस्यसमस्तस्य छेत्तुःछेदनकर्तुःपुरुषस्य नियंतानियामकः । यंनियामकंविना नऋतेत्वत्क्रियतेकिंचनारइतिश्रुत्या कोपिकिमपिकर्तुंनशक्नोतीतियावत् । सकृष्णःकेनपुरुषेण च्छेद्यः । नहिकोपिप्रेक्षावान्स्वांगंछिंधीतिपरंप्रेरयेदितिभावः ॥ २७ ॥ युक्त्यंतरंचाह ॥ स्वाहारस्येति ॥ हियस्मा त्स्वाहारस्य याज्ञीयपश्वंगस्थवपाद्याहारस्य विच्छेदे विघ्नइतियावत् । यःपरमात्मा दक्षप्रजापतिं पशुपतेर्महादेवस्यापि अच्छेद्यं छेदायोग्यं ।

स्वाहारस्यहिविच्छेदेदक्षंपशुपतेरपि ॥ अच्छेद्यमकरोद्यस्तुतस्यच्छेदंकरोतिकः ॥ २८ ॥ आक्रम्योरसिद
क्षस्यशितधारेणहेतिना ॥ छिंदन्नपितदुद्धर्तुंनाशक्नोत्र्यंबकस्तदा ॥ २९ ॥ शस्त्रैरस्त्रान्वितैरेनमनिर्भिण्णत्व
चंहरः ॥ विस्मयंपरमापन्नोदध्यौपशुपतिश्चिरं ॥ ३० ॥ दृष्ट्वासंज्ञपनेयोगंपशूनांसपतिर्मखे ॥ यजमानप
शोस्तस्यकायात्तेनाहरच्छिरः ॥ ३१ ॥ इतिभागवतेप्रोक्तमताश्चित्रंकिमच्युते ॥ ३२ ॥ ॥

तस्यपरमात्मनः । पशुसंज्ञपनात्पूर्वं रुद्रेणदक्षशिरश्छेदेकृते ममाहुतेरेवच्छेदोभविष्यतीतिधिया एनंमाछिंधीतिभगवत्संकल्पमात्रेणैवशिवोपितंछेत्तुमशक्तोभूत्किल । एवंचाप्रयत्नेनैवरुद्रस्यापिशक्तिस्तंभकंतंकश्छेत्तुंशक्तइतिभावः ॥ २८ ॥ अस्मिन्नर्थेप्रमाणतयाभागवतस्थश्लोकत्रयमुदाहरति ॥ आक्रम्येत्यादिना ॥ तच्छिरःउद्धर्तुं कायादपहर्तुं तदातस्मिन्समये । एनंदक्षं । परंविस्मयमितिसंबंधः । मखे संज्ञपने याज्ञीयपशुत्वेनहिंसायां योगमुपायंदृष्ट्वा दक्षमेवयज्ञपशुंकृत्वाहन्मि तच्छिरसाहरेराहुतिंचदा

स्यामि तदासुतुष्टोमच्छक्तिंनस्तंभयेदित्युपायंदृष्ट्वेतियावत् । तेनयोगेन । अतः एतादृशशक्तिमत्त्वादच्युतेकिंचित्रं नाकिंचिदप्याश्चर्यमितिभावः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ युक्त्यंतरंचाह ॥ यत्कृपेति ॥ रक्षसामस्त्रशस्त्राणीतिसंबंधः । किलेत्यनेनसर्वजनप्रसिद्धिंद्योतयति ॥ ३३ ॥ पुनरपियुक्त्यंतरमाह ॥ संध्यर्थमिति ॥ यंविश्वरूपिणंपरमात्मानंबद्धुमपिनशेकुः । पुरस्तात्पाश्वतःपृष्ठतः अंतर्बहिश्चतत्सर्वत्रपरिपूर्णत्वेनशस्त्रांतरमपिविद्यमानत्वादितिभावः ॥ ३४ ॥ उक्तार्थेयुक्त्यंतरंप्रमाणवचनेनसूचय

यत्कृपालेशतस्त्रातंप्रह्लादंकिलरक्षसां ॥ चिच्छिदुर्नास्त्रशस्त्राणिकश्छिंद्यात्तंमहाप्रभुं
॥ ३३ ॥ संध्यर्थंहस्तिनपुरींप्रविष्टंकिलकौरवाः ॥ नबद्धुमपियंशेकुःकश्छिंद्यात्तंमहा
प्रभुं ॥ ३४ ॥ अतोज्ञजनमोहायनटवद्दर्शयेत्परं ॥ सुधादृष्ट्यामृताशेषस्वसैन्योज्जी
वनैकदः ॥ ३५ ॥ नटोनाट्यकृते नारी नार्येवाज्ञस्यकिंदृशा ॥ ३६ ॥ ॥

न्नुपसंहरति ॥ अतइति ॥ अतः पूर्वोक्तरीत्यायुक्तिबाधितत्वात् । नटवदैंद्रजालिकवत् । दर्शयेच्छेदभेदादिकं सुधादृष्ट्या मृतानिअशेषस्वसैन्यानि कपिकटकानि तेषामुज्जीवनैकदः केवलोज्जीवनप्रदः । इदंवासुदेवसहस्रनाम्निरामावतारप्रस्तावेविद्यमानं । रामदृष्टिमात्रेणमृतसंजीवनसमर्थस्यकथंछेदभेदादिकंघटेतेतियुक्तिंसूचयितुमेतेनैवनाम्नाविशिष्यनिर्देशःकृतइतिज्ञातव्यं ॥ ३५ ॥ नटवदित्युक्तंविवेचयति ॥ नटइति ॥ नाट्यकृतेनर्तनार्थंनारी स्त्रीवेषधारी अज्ञस्यदृशा नार्येवकिं नेतिसंबंधः । तथाहरिरपीति

भावः ॥ ३६ ॥ प्राक्प्रबलप्रत्यक्षविरोधेनवेधादिप्रत्यक्षस्यभ्रमत्वमुक्तं । इदानीमुपजीव्यविरोधेनापिभ्रमत्वंसदृष्टांतमुपपादयति
॥ गंधस्येति ॥ आद्यपद्यंदृष्टांतार्थं । यथास्वायोग्यगंधज्ञापनायचक्षुषोपिघ्राणमुपजीव्यं । तथाश्रौतार्थस्य श्रुत्येकसमधिगम्या
र्थस्य ज्ञापने यद्यस्मान्मानानि श्रुतीतरप्रत्यक्षादिप्रमाणानि श्रुतिमुपजीवंतीतिसंबंधः । अतःउपजीव्यत्वात् ॥ ३७ ॥ ३८ ॥
तद्विरुद्धं निरनिष्टोनिरवद्यइत्यादिश्रुतिविरुद्धं मानं छेदवेधादिप्रत्यक्षं । यद्यस्मादुपजीव्यश्रुतिविरोधतःस्वार्थसाधकंनेतिसंबं

गंधस्यज्ञापनेचक्षुर्घ्राणानुसरणंचरेत् ॥ उपनीतोयतोगंधश्चक्षुषापिप्रकाश्यते ॥ ३७ ॥
श्रौतार्थज्ञापनेमानान्युपजीवंतियच्छ्रुतिं ॥ अतश्श्रुत्येकगम्येऽर्थेश्रुतिरेवबलीयसी ॥३८॥
तद्विरुद्धंतुयन्मानमुपजीव्यविरोधतः ॥ नस्वार्थसाधकंतस्मादज्ञदृङ्नेशदोषदृक् ॥ ३९ ॥
नहिमंददृशांदृष्ट्यारत्नस्यानर्घतागता ॥ किंतुमंदैवदृग्रत्नपरीक्षाशास्त्रतोभवेत् ॥ ४० ॥
श्रुतिस्तुनिरनिष्टोसौनिरवद्यइतिप्रभुं ॥ स्पष्टमाचष्ट तत्कष्टंद्रष्टुमीष्टेकईशितुः ॥ ४१ ॥

धः । तस्मात्अज्ञदृक् अज्ञानिनांवेधादिप्रत्यक्षं ईशदोषदृक् ईश्वरस्यदोषसाधकदर्शनंनेतिसंबंधः ॥ ३९ ॥ उक्तार्थेऽतरंगंदृष्टां
तमाह ॥ नहीति ॥ मंददृशां रत्नपरीक्षाशास्त्रमजानतां दृष्ट्या शिलामात्रमितिदृष्ट्याअनर्घताऽमूल्यता गतानहीतिसंबंधः ।
किंतुरत्नपरीक्षाशास्त्रतः दृक् अज्ञदर्शनमेव मंदाभवेदितियोजना । अत्रशास्त्रेणैवप्रत्यक्षबाधदर्शनादयमंतरंगदृष्टांतइतिज्ञातव्यं
॥ ४० ॥ उपजीव्यश्रुतिंस्पष्टमाह ॥ श्रुतिस्त्विति ॥ अनेन निरनिष्टोनिरवद्यइतिश्रुतिरर्थतोगृहीतेतिद्रष्टव्यं । स्पष्टमाचष्टेति

पूर्वेणान्वयः । कःपुरुषईशितुः कष्टं वेधादिरूपानिष्टं द्रष्टुमीष्टे समर्थोभवति नकोपीत्यर्थः ॥ ४१ ॥ अधुना कैलासयात्रयाकृ
ष्णस्य लिंगप्रतिष्ठयारामस्यचाज्ञै रुच्यमाननैच्यंपरिहर्तुमाह ॥ नकर्मणेति ॥ यःपरःप्रभुः कर्मणापुण्यकर्मणा नवर्धते । नकर्म
णावर्धतइतिश्रुत्यंशग्रहणमिदं । नोकनीया न्कर्मणापापकर्मणा कनीयांश्चन । उभयत्राप्यन्वयदर्शनाय कर्मणेतिपुण्यपापसाधा
रणवचनं । तस्य कृष्णरामरूपिणोहरेः यात्रा कैलासयात्रा भूत्यै पुत्राद्यैश्वर्यप्राप्तयेन । उक्तश्रुत्यापुण्येनवृद्ध्यभावोक्तेः।शिवा

नकर्मणावर्धतेयोनोकनीयान्परःप्रभुः ॥ नभूत्यैनांहसोहत्यैतस्ययात्राशिवार्चनं ॥ ४२ ॥
नमेपार्थास्तिकर्तव्यंत्रिषुलोकेषुकिंचन ॥ नानवाप्तमवाप्तव्यंवर्तएवचकर्मणि ॥ ४३ ॥
नमांकर्माणिलिंपंतिनमेकर्मफलेस्पृहा ॥ इतिगीतावचनतस्समाधत्स्वमनस्सदा ॥ ४४ ॥

र्चन मंहसः ब्रह्महत्यारूपपापस्य हत्यैहननायनेतिसंबंधः । पापेनकनीयस्त्वाभावसाधकश्रुतिविरोधादेव । तस्मान्मनुष्यावतारे
मनुष्यवन्नटनमेवेतिभावः ॥ ४२ ॥ गीतावाक्येनाप्युक्तसमर्थंसमर्थयते ॥ नमेपार्थेति ॥ मेकर्तव्यंनास्तीति कैलासयात्राकारि
णःकृष्णस्यैववचनं । अनवाप्तं प्रागप्राप्तं अवाप्तव्यं उपरिप्राप्यंनैवेतिसंबंधः । तथापि जनसंग्रहाय कर्मणि कैलासयात्रा सूर्यग्र
हणेस्यमंतपंचकयात्रा देवर्षितर्पणादिकर्मणि । उत्सीदेयुरिमेलोकानकुर्यांकर्मचेदहमित्युत्तरवाक्याज्ञानवाप्तमवाप्तव्यमितिस्वफ
लनिषेधाच्चकेवलंजनसंग्रहायेतिगम्यते । अवशिष्टंतुस्पष्टं । समाधत्स्व समाहितंकुरु ॥ ४३ ॥ ४४ ॥ उक्तार्थेभागवतवचनमाह॥

युक्ति-

॥ ९ ॥

ईजइति ॥ यत्र (इय) स्यमंतपंचके । कर्मणापुण्यपापरूपेण । रामःपरशुरामः । अत्रतुजनसंग्रहायेतिस्पष्टं । अन्यःमनुष्या दिः । अघापनुत्तये यथातथालोकस्यसंग्रहायफलवत्त्वमात्रेदृष्टांतोनतुतद्वदघापनुत्तयइतिभावः । भगवानीशइतिचतत्रहेतुसूचनं ॥ ४५ ॥ एवं श्रुतिस्मृतियुक्तिप्रत्यक्षाख्यप्रमाणत्रितयेनापिभगवतोनिर्दोषत्वेसिद्धेपि यस्तंदोषिणंमनुते सनिर्दोषमहापुरुषदूषणा ख्यदोषेणांधेतमसिपात्यतइतीममर्थंसदृष्टांतमुपपादयन्निर्दोषत्वसाधनमुपसंहरति ॥ अथापीति ॥ अथापि एवंनिर्दोषत्वेसिद्धे पि । वृथाप्रमाणंविना । तंपुरुषं दोषेषुः दोषाख्यबाणः । शिलायांक्षिप्तः अग्रेदारुप्रोतः यश्शरस्तस्योपमायस्यसः । दोषेषुरिति

ईजेचभगवान्रामोयत्रास्पृष्टोपिकर्मणा ॥ लोकस्यसंग्रहायेशोयथान्योऽघापनुत्तये ॥
इतिभागवतोक्त्याचस्वस्थचित्तस्सदाभव ॥ ४५ ॥ अथापिभगवद्दोषंवृथायोमनुतेनरः ॥
तंदोषेषुःशिलाक्षिप्तदारुप्रोतशरोपमः ॥ श्रुत्याकृष्टगुणोत्सृष्टैर्धानुष्कमनुधावति ॥ ४६ ॥

संबंधः । दोषसाधकत्वेनाभिमतप्रत्यक्षादीनामयोवत्परगात्रभेदनसामर्थ्याभावस्योपपादितत्वाद्दारुप्रोतेत्युक्तं । धानुष्कं प्रयोक्ता रंत्वामेवोपधावति । त्वमेवदोषेणतमसिनिपात्यसइतिभावः । तत्रहेतुः श्रुत्याकृष्टगुणोत्सृष्टैरिति । श्रुत्यावेदेनाकृष्टाआनीतास्सा धिताइतियावत् । हरेर्गुणाः अच्छेद्यत्वावेध्यत्वादयः तेषामुत्सृष्टेःपरित्यागात् । श्रुतिप्रतिपादितनिर्दोषत्वाख्यगुणोत्सर्जनादिति भावः । इषुपक्षेतु आकर्णांतमाकृष्टमौर्वीमोचनादितिद्रष्टव्यं । दारुप्रोतशरः आकर्णांतमाकृष्यमोचनएवधानुष्कमनुधावति । तद्व

मल्लिका

शुद्धिसौ०

द्दोषेषुरप्युक्तभगवद्गुणविसर्जनात्  त्वामेवयमदूतकराहतखड्गशरवह्न्यादिभिश्छेद्यत्ववेध्यत्वदाह्यत्ववंतंकृत्वातमसिमज्जयतीति भावः ॥४६॥ तस्मादित्युपसंहारः ॥४७॥ भगवतिपरोक्ताज्ञानाख्यंदोषं विनाकर्तुं तदारोपएवनसंभवतीत्याह॥ इदंरूप्यमिति॥ भ्रमस्यविग्रहःस्वरूपं इदंरूप्यमितितादात्म्यारोपरूपंवा रूप्यतात्रेतिसंसर्गारोपरूपंवा । तृतीयःप्रकारोनास्ति । तस्मिन्नर्थेपरभाष्यसंमतिमाह ॥ अन्योन्यधर्मानिति ॥ अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतिवाक्यंसंगृहीतं । भाषावा

तस्मात्स्वमूलरूपेचस्वावतारेषुचप्रभुः ॥ अवद्यगंधविधुरइतिसर्वमनोरमं ॥ ४७ ॥ इदंरूप्यं
रूप्यतात्रेत्येवंवाभ्रमविग्रहः ॥ अन्योन्यधर्मानध्यस्यचान्योन्यात्मकतांतथा ॥ ४८ ॥ इति
भाष्यकृतोभाषातेनभ्रांतिर्द्विरूपिणी ॥ तादात्म्यारोपरूपावाधर्मारोपात्मिकापिवा ॥ ४९ ॥
नाज्ञानमहमित्यस्तिनाज्ञानत्वंमयीत्यपि ॥ भ्रमोब्रह्मणितेनस्यात्कथमज्ञानकल्पना ॥५०॥
अज्ञोहमितितुज्ञानंसिद्धाज्ञानस्यवेदनं ॥ उक्ताकारद्वयायोगात्सिद्धिश्चभ्रमरूपिणी ॥ ५१ ॥

क्यं । तेनकारणेन । तद्विरूपत्वमेवदर्शयति ॥ तादात्म्येति ॥ ४८ ॥ ४९ ॥ अस्तुभ्रांतेर्द्विरूपत्वं तथापिप्रकृतेकिमित्यतआह ॥ नाज्ञानमिति ॥ ब्रह्मणि अज्ञानमहमितिभ्रमः अज्ञानतादात्म्यभ्रमः मयिअज्ञानत्वमितिसंसर्गारोपभ्रमश्चयस्मान्नास्ति तद्रीत्यैवनास्ति तेन सर्वसंमतभ्रमाकारभ्रमाभावेन अज्ञानकल्पनाअज्ञानारोपः कथंस्यादितिसंबंधः ॥ ५० ॥ नन्वहमज्ञइत्येवाज्ञानारोपोस्त्वित्यतआह॥ अज्ञोहमिति ॥अहमज्ञइत्यर्थः । इतिज्ञानंत्विति संबंधः । सिद्धाज्ञानस्यवेदनं प्रतीत्यंतरसिद्धस्वरूप

स्याऽऽत्मनिसंसर्गमात्रवेदनं । सिद्धिः प्राथमिकीसिद्धिः नास्त्येवेतिकृत्वाऽज्ञानंकुतःकल्पितंस्यादितिसंबंधः । इयंतुधीः अज्ञो मितिधीः । अज्ञानकल्पनारूपा । अज्ञतानहदात्म्यस्यवाअज्ञानत्वाख्यतद्धर्मस्यवात्रारोपादर्शनादितिभावः । ततः अस्यारोपरू पत्वाभावात् । आरोपांतरस्यचोक्तरीत्याऽदर्शनादित्यर्थः ॥ ५१ ॥ ५२ ॥ ननुतर्हिप्राक्सिद्धाज्ञानसंसर्गारोपोयमस्त्वित्यतआह ॥ नाज्ञानमिति ॥ अयमज्ञानंधर्मः अज्ञानाख्योधर्मइतियावत् । अन्यधर्मः ब्रह्मव्यतिरिक्तस्यकस्यचिद्धर्मोनेतियोजना । तत्र

नास्त्येवेतिकुतोऽज्ञानंकल्पितंस्यादियंतुधीः ॥ नाज्ञानकल्पनारूपा ततोऽज्ञा
नमकल्पितं ॥ ५२ ॥ नाज्ञानमन्यधर्मोयंब्रह्माज्ञानैकवादिनः ॥ ५३ ॥ अतद्वतिचत
द्वत्त्वज्ञानंचेत्स्यादयंभ्रमः ॥ अज्ञातवचतेब्रह्मतद्वत्ताधीःकथंभ्रमः ॥ ५४ ॥

हेतुगर्भविशेषणं ॥ ब्रह्माज्ञानैकवादिनइति ॥ केवलंब्रह्माश्रितमेवाज्ञानमितिवादिनः । आश्रयत्वविषयत्वयोगिनीनिर्विशेष चितिरेवकेवलेत्युक्तेरज्ञानंब्रह्माश्रितमेवनान्याश्रितमितिभावः ॥ ५३ ॥ अय मज्ञोहमित्यनुभवः अतद्वति अज्ञानाभाववति त द्वत्त्वज्ञानमज्ञानवत्त्वज्ञानंचेत्भ्रमस्स्यात् । अज्ञानसंसर्गारोपोपितदास्यात् यद्यज्ञानानाधारेब्रह्मणिअज्ञानाधारत्वंप्रतीयेत । न चैवंतवमतमित्याह ॥ अज्ञानवचेति ॥ तेतवमते । तद्वत्ताधीः अज्ञानवत्ताधीः । अज्ञानसंसर्गधीरितियावत् । संसर्गरहितेसंस ॥ १४५ ॥

र्गज्ञानंहिभ्रमःस्यात् । नचेदंज्ञानंतादृशमितिभावः ॥ ५४ ॥ नन्वज्ञानमेवतत्रारोपितं अतस्तत्संसर्गधीरपिभ्रमइत्यतआह ॥ अ ज्ञानारोपतइति ॥ अज्ञानारोपतः अज्ञानस्यमिथ्यात्वेनारोपितत्वात् । तत्रब्रह्मणि । तद्योगस्याज्ञानसंसर्गस्य अभाववाक् अभावइतिवाक् अज्ञानारोपमूलैव अज्ञानारोपेसिद्धेहिआरोपितस्यतस्यसंसर्गोप्यारोपितस्स्यादितिभावः । सच संसर्गारोपमूली भूताज्ञानारोप स्सर्वत्र ब्रह्मण्यन्यत्रचदुर्लभः । उक्तरीत्याऽऽज्ञानतादात्म्यारोपस्याज्ञानत्वरूपतद्धर्मारोपस्यचक्वाप्यदर्शनात् । ततश्चाज्ञानस्यानारोपितत्वात् तत्संसर्गस्याप्यारोपितत्वपक्षोनघटते घटादौजडेऽज्ञानसंसर्गरहितेतत्संसर्गप्रतीतौसंसर्गारोपस्स्यात्।

अज्ञानारोपतस्तत्रतद्योगस्याप्यभाववाक् ॥ अज्ञानारोपमूलैवसचसर्वत्रदुर्लभः ॥ ५५ ॥
अन्योन्यधर्माध्यासोस्तितत्राध्यासस्तवापिन ॥ अतोनाज्ञानसंसर्गारोपोप्ययमभूत्तव ॥ ५६ ॥

नचैवं । अतस्संसर्गोप्यनारोपितएवेतिभावः ॥ ५५ ॥ अहमज्ञइतिज्ञानस्याज्ञानारोपत्वपक्षेऽपसिद्धांतश्चस्यादित्याह ॥ अन्यो न्येति ॥ अन्योन्यधर्माध्यासः देहधर्मस्यकृशत्वादेः तवमतेआत्मन्यध्यासोस्ति । तत्रात्मनि अध्यासःधर्मिणएव । अन्यो न्यात्मकतामित्युक्त्यादेहतादात्म्यारोपांगीकारेपि मयिदेहइतिदेहाधारत्वादिभ्रमस्तवापिमतेन । एवंचाज्ञानतादात्म्यारोपसंभवे प्यज्ञानंमयीतिसंसर्गारोपःकथंस्यात् । किंत्वज्ञानत्वरूपाज्ञानधर्मस्यैवसंसर्गारोपोवाच्यः । देहस्येवाज्ञानस्यैवसंसर्गारोपेपिकथं नापसिद्धांतइतिभावः । अतः अज्ञानत्वधर्मसंसर्गारोपस्यैवसंसर्गारोपत्वात् । अय मज्ञानवानहमित्यनुभवः अज्ञानसंसर्गारोपो

युक्ति- पिनाभूदित्यन्वयः । अपिपदेनाज्ञानस्वरूपारोपत्वाभावंसमुच्चिनोति ॥ ५६ ॥ उक्तार्थेयुक्तिंसूचयन्दृष्टांतमाह ॥ तत्रैवेति ॥ शुद्धिसै०
तत्रैवधर्मिणि सन्निकृष्टस्य सन्निकर्षवतः । सन्निकर्षे सन्निकर्षविषये । वस्तुगत्या घटवतीयाभूमिः तस्याःघटस्यच संयोगः यद्य
॥ ११ ॥ स्मादकाल्पनिकः तस्मादज्ञानवतिअज्ञानसंसर्गारोपोपिनघटतइतिभावः ॥ ५७ ॥ दोषाभावाच्चनाज्ञानारोपइत्याह ॥ दोषेति ॥ मल्लिका०
तवमते । नन्वज्ञानस्यैवाज्ञानारोपेदोषत्वमस्त्वित्याशंक्यबहुधादूषयति ॥ तमइति ॥ तमःअंधकारः अन्यभ्रमेदोषः घटादि

तत्रैवसन्निकृष्टस्यसन्निकर्षेकथंभ्रमः ॥ घटवद्भूमिघटयोस्संयोगोयदकल्पितः ॥ ५७ ॥
दोषाभावाच्चनाज्ञानभ्रांतिर्युक्तामतेतव ॥ तमोन्यभ्रमदोषोपिनहिदोषःस्वदर्शने ॥ ५८ ॥
तमोंतरंचतमसःप्रमायैस्याद्भ्रमायन ॥ तेनाज्ञानांतरंचाज्ञानस्योपोद्बलकंभवेत् ॥ ५९ ॥
प्रमायाएवहेतुस्स्यात्तद्भूयस्त्वेक्कतद्भ्रमः ॥ अतद्वतिहितद्धीस्त्वेभ्रमःस्यान्नतुतद्वति ॥ ६० ॥

भ्रमेदोषोपि स्वदर्शनेंऽधकारस्यैवदर्शनेदोषोनहि । अंधकारेसत्यंधकारप्रमोदयदर्शनात् । एवमज्ञानेसत्यज्ञानवशादहंममतादि
सांसारिकभ्रमोस्तु अज्ञानस्यस्वस्यतुप्रमैवस्यात् नभ्रमइतिभावः । दोषोहिस्वयंविद्यमानएवभ्रमकारणंस्यात् । विद्यमानस्य
चकथंभ्रमइतिभावः ॥ ५८ ॥ ननूत्तराज्ञानस्यपूर्वाज्ञानंदोषस्स्यादित्यतआह ॥ तमोंतरमिति ॥ यस्मात् तमोंतरं तमसः प्र
मायैस्यात् । तेन तमसःतमोंतरप्रमानुकूलत्वेन । अज्ञानस्योपोद्बलकं दार्ढ्यसंपादकं । अतःप्रमायाएवहेतुस्स्यादितिसंबंधः । अज्ञान ॥ १४६ ॥

बाहुल्येअज्ञानस्यसुतरांप्रमैवस्यादितिभावः। तत्रहेतुंस्फोरयति ॥ तद्भूयस्त्वइति॥तस्यवस्तुतःभूयस्त्वेनिबिडत्वे तद्भ्रमःक्वचिर। लतमसिछायादौकदाचित्तमोनेतिभ्रमसंभवेपि निशायांगुहादौचनिबिडेंधकारेंऽधकारभ्रमादर्शनादितिभावः॥तदेवानुभावयति॥ अतद्वतीति ॥ अतद्वति तद्रहिते। तत्सत्त्वेतत्प्रमायाएवावश्यंभावादितिभावः ॥५९॥६०॥ युक्तिदारिद्र्याभावादिदमाशंक्यदूषितं। वस्तुतस्तुनैवंतन्मतमित्याह ॥ अनादीति ॥ तस्याज्ञानस्य। अज्ञान मज्ञानांतरं ॥ ६१ ॥ दूषणांतरमाह ॥ किंचेति ॥ प्रातीतिकाज्ञानं प्रतीतिसमसमयसत्ताकं स्वभ्रमकारणं स्वस्यैवभ्रमकारणं। हियस्माद्दोषःभ्रमात्पूर्वः। दोषस्यभ्रमकारणत्वेन

अनाद्यज्ञानवादेचतस्याज्ञानंनकिंचन ॥ ६१ ॥ किंचप्रातीतिकाज्ञानंकथंस्वभ्रमकारणं ॥ भ्रमात्पूर्वोहिदोष
स्स्याद्दोषजश्चभ्रमोभवेत् ॥ ६२ ॥ दोषेधीस्स्याद्भ्रमाकाराभ्रमेसत्येवतच्चसत् ॥ प्रातीतिकंभवेद्दोषइत्यन्योन्या
श्रयोध्रुवः॥ ६३॥ किंचाज्ञानाध्याससरूपीसाक्ष्यनादिर्मतेतव ॥ जन्मैवास्यनयुक्तंतद्दोषजत्वंतुदूरतः ॥ ६४ ॥

कारणस्यचपूर्वभावित्वावश्यंभावादितिभावः। तदेवोपपादयति ॥ दोषजइति ॥ ६२ ॥ दूषणांतरमाह ॥ दोषइति ॥ दोषे अज्ञानाख्यदोषेसति । भ्रमाकारा अज्ञानभ्रमाकारा । भ्रमेसत्येव प्रातीतिकंतदज्ञानंसत् विद्यमानंदोषः स्वभ्रमहेतुर्दोषः। इत्यनेनप्रकारेणान्योन्याश्रयोध्रुवः अपरिहार्यः। अज्ञानरूपदोषेसत्यज्ञानभ्रमः। अज्ञानभ्रमेसतिप्रातीतिकाज्ञानरूपदोषसत्त्वमित्यन्योन्याश्रयइतिभावः ॥ ६३ ॥ दोषांतरंचाह ॥ किंचेति ॥ अज्ञानाध्याससरूपी अविद्यासाक्षात्काररूपीत्यर्थः। तवमतेअ

नादिरितिसंबंधः । साक्षिणश्चिद्रूपत्वांगीकारादितिभावः । अस्यसाक्षिणः ॥ ६४ ॥ दोषाजन्योपिभ्रमोस्तुकोदोषइत्यत आह ॥ अमानत्वस्वतस्त्वमिति ॥ अप्रामाण्यस्वतस्त्वमित्यर्थः । भ्रमः दोषाजन्यश्चेत्तर्हीतिशेषः । अतः अज्ञानज्ञानस्यसाक्षिणो दोषाजन्यत्वनियमात् । अतःअज्ञानारोपायोगान्निमित्तात् । असंभवदारोपाकारं दोषाजन्यंचज्ञानमेवहिप्रमा । साक्षीचाजन्य तयादोषाजन्यः एवंअज्ञानतादात्म्याद्यगोचरतयातदनारोपरूपश्च तद्विषयत्वेप्रमाविषयत्वमेवस्यादितिभावः । प्रमीयमाणत्वा दस्तीतिप्रमयासाधितत्वात् । त्वयिजीवे । अहमज्ञइतिजीवएवाज्ञानस्यसाक्षिणासाधितत्वात् अज्ञानस्यारोपितत्वं ब्रह्माश्रितत्वं

अमानत्वस्वतस्त्वंस्याद्दोषाजन्योभ्रमोपिचेत् ॥ अतःप्रमीयमाणत्वात्त्वय्यज्ञानमकल्पितं ॥ ६५ ॥
तत्वज्ञानायोग्यताख्यदोषोस्त्यासुरसाक्षिषु ॥ तन्मूलत्वंचतज्ज्ञानेविशेषाद्घटतेमम ॥ ६६ ॥
निर्विशेषचितोदोषःकस्याज्ञन्मचकिंतव ॥ अज्ञानारोपवादस्तदज्ञानादेवकेवलं ॥ ६७ ॥

चन किंतुजीवाश्रितत्वमेवेत्यर्थः । यद्वा एतादृशतत्वज्ञानाभावाच्चत्वय्यज्ञानमकल्पितं दृढमेव । एवंवदन् त्वमेवाज्ञानीतिभावः ॥ ६५ ॥ नन्वयोग्यजीवानांसाक्षी भवतामपिमतेनित्योभ्रमरूपश्च । तत्रकोदोषः काचततोजनिरित्यतआह ॥ तत्वज्ञानेति ॥ तज्ज्ञाने आसुरसाक्षिरूपज्ञाने तन्मूलत्वं तत्वज्ञानायोग्यताख्यदोषजन्यत्वं तद्व्यक्तत्वमित्यर्थः । विशेषात् भेदप्रतिनिधिरूपविशे षात् । ममतते । योग्यतायाःज्ञानस्यचतत्स्वरूपत्वेनैकत्वात् । भेदसापेक्षव्यंग्यव्यंजकभावघटनायविशेषादित्युक्तं ॥ ६६ ॥ ॥ १४७ ॥
निर्विशेषब्रह्मवादिनस्त्वमतेनेदंघटतइत्याह ॥ निर्विशेषेति ॥ समस्तधर्मशून्यचितइत्यर्थः । तेमते दोषःकः जन्मचकिं नकि

मपि । निर्धर्मकत्वांगीकारात् योग्यताख्यधर्मस्यचाभावादितिभावः । तत्तस्मात् आरोपमूलदोषाद्यभावात् । अज्ञानात् पूर्वोक्त रज्ञानाभावात् ॥ ६७ ॥ अधुनाऽज्ञानारोपासंभवेचसर्वतच्छास्त्रंगतमित्याह ॥ अज्ञानेति ॥ अज्ञानारोपएवमूलंयस्यसः । सो पि शास्त्रपादपोपि । वाताहतः मूलाभावेवाय्वाहततरुवत् । वातेनमुख्यप्राणेन । तदुक्तयुक्तिभिरितियावत् । आहतः ताडितः । पतेत् अधःपतेत् ॥ ६८ ॥ पतनप्रकारमेवाह ॥ सत्याज्ञानेत्यादिना ॥ आरोपासंभवात् सत्य मनारोपितं यदज्ञानं तद्भवं तदुपादानकमित्यर्थः । केनहेतुनाअसत्यमितिसंबंधः । सत्योपादानकस्यकार्यस्यसत्यत्वावश्यंभावादितिभावः । तत्रदृष्टांतः

अज्ञानारोपमूलस्तेशास्त्रविस्तृतपादपः ॥ मूलस्यदुर्बलत्वेतुसोपिवाताहतःपतेत् ॥ ६८ ॥
सत्याज्ञानभवंविश्वमसत्यंकेनहेतुना ॥ आम्रस्यबीजतःकिंस्याद्विषवृक्षस्यसंभवः ॥ ६९ ॥
सत्याज्ञानागतोभेदोज्ञानबाध्यःकथंतव ॥ सत्याज्ञाननिवृत्तेश्चायोगान्मोक्षःकथंतव ॥ ७० ॥

॥ आम्रस्येत्यादि ॥ उपादानोपादेययोस्सर्वत्रसाजात्यदर्शनादितिभावः । अनेन विश्वमिथ्यात्ववादाख्यशाखापतितेतिद्रष्टव्यं ॥ ६९ ॥ सत्याज्ञानागतः सत्याज्ञानोपादानकः भेदः । अतएवसत्यः । तवमतेज्ञानबाध्यःकथं । सत्यस्यब्रह्मवद्बाधायोगादिति भावः । अथवा सत्याज्ञानागतः सत्याज्ञाननिमित्तकोभेदः । अतएवसत्यः । अज्ञानसार्वज्ञाख्यभेदकधर्मयोस्सत्यत्वेभेदस्यापि सत्यत्वावश्यंभावादितिभावः । ज्ञानबाध्यः ब्रह्मज्ञानबाध्यः । मुक्तावपीश्वरसकलमाहात्म्याज्ञानस्यसत्त्वेनविरुद्धधर्मानुवर्तना

दितिभावः । अनेन भेदमिथ्यात्वशाखापतितेतिद्रष्टव्यं । ते तवमते । सत्यस्याज्ञानस्यनिवृत्तेरयोगात् । परेणब्रह्मवत्सत्यस्यनि वृत्त्यनंगीकारादितिभावः । मोक्षः अविद्यानिवृत्तिरूपमोक्षः । अनेनाज्ञाननिवृत्तिरूपचरमशाखापतितेतिद्रष्टव्यं ॥ ७० ॥ प्रति कर्मव्यवस्थितिः यदपरोक्षवृत्त्यायदधिष्ठानावारकाज्ञानंनिवर्तते स घटःपटोवा तस्यचैतन्यस्यविषयइति प्रतिविषयव्यवस्थेत्य र्थः । उक्तरीत्यासत्यस्याज्ञानस्यनिवृत्त्ययोगादितिभावः । अनेनप्रतिकर्मव्यवस्थाख्यशाखापतितेतिद्रष्टव्यं । ऐक्यस्य जीवब्र ह्मैक्यस्यावरकाभावात् सत्यस्याज्ञानस्यभेदस्थापकस्यैक्यघातकतया आरोपितमज्ञानमावरकमितिवक्तव्यं । तस्याभावादित्य

अज्ञानासंभवेक्वस्यात्प्रतिकर्मव्यवस्थितिः ॥ ऐक्यस्यावरणाभावाच्छास्त्रवेद्येचकिंभवेत् ॥ ७१ ॥
अज्ञानासंभवा द्ब्रह्मभ्रांत्या सर्वंनकल्पितं ॥ अज्ञानासंभवादेवशास्त्रंसर्वंगतंतव ॥ ७२ ॥

र्थः । स्वतस्सिद्धब्रह्मस्वरूपभूतैक्यस्यशास्त्रविषयता अज्ञानावरणादेवहिवक्तव्या । तदभावेतस्यकथंशास्त्रवेद्यतेतिभावः । अने नशास्त्रतरोर्विषयाख्यमूलशाखैवपतितेतिद्रष्टव्यं । अज्ञानासंभवात् उक्तरीत्याब्रह्मण्यज्ञानासंभवात् । सर्वं ब्रह्मभ्रांत्या ब्रह्मणो विपरीतज्ञानेन अधिष्ठानाज्ञानादेवहिविपरीतज्ञानं तदभावेकथंभ्रांतिरितिभावः॥७१॥पूर्वंसत्योपादानकत्वेनसत्यत्वमुक्तं।इदानींतु भ्रांत्ययोगेनसत्यत्वमितिभावः । उपसंहरति ॥ अज्ञानासंभवादिति ॥ गुणानामाकारस्यच मिथ्याभूताज्ञानकल्पितत्वेनमि थ्यात्वेहि परमार्थतोनैर्गुण्यंनिराकारत्वंचसिद्ध्येत् । अज्ञानासंभवादेवतदुभयरूपशाखयोरपिपतनात्सर्वमित्युक्तं । एवमज्ञानप्रती

तेरारोपत्वासंभवेप्रमात्वावश्यंभावेन प्रमाविषयस्यचसत्यत्वनियमात् सत्याज्ञानंप्रसाध्यमायिमतंदूषितं। वस्तुतस्तु मिथ्याभूता ज्ञानस्यासंभवे सत्याज्ञानस्यचतेनैवानंगीकारेणाज्ञानस्वरूपस्यैवाभावात् अज्ञस्याधिकारिणोऽज्ञातस्याज्ञाननिवृत्तिरूपस्यप्रयोजनस्याविद्यकभेदस्याऽऽविद्यकभगवद्गुणदेहादेराविद्यकप्रपंचादेश्चायोगेन तत्प्रक्रियासर्वापिविक्रियैवाभूदितिद्रष्टव्यं ॥ ७२ ॥ प्रकारांतरेणाप्यज्ञानवादंदूषयति ॥ किंचेति ॥ अहमित्यज्ञानस्यविज्ञानं देहिनामेवेतिसंबंधः। अहमज्ञोमामन्यंचनजानामीतिवदंतोलौकिकाएवपुरुषाः। नत्वलौकिकस्सर्वज्ञोभगवानप्येवमाह। अतःप्रत्यक्षंजीवेष्वेवाज्ञानंसाधयति । ब्रह्माश्रिताज्ञानेपरस्या

किंचाज्ञानस्यविज्ञानमहमित्येवदेहिनां ॥ आशा ब्रह्माश्रिताज्ञानेपश्यकिंकेनसंगतं
॥ ७३ ॥ ऐक्यात्तदेवचेद्ब्राह्ममन्योन्याश्रयतातदा ॥ ७४ ॥ ऐक्यसिद्धौभवेदज्ञंब्रह्म
तस्याज्ञतावशात् ॥ जीवभावे भवेदैक्यंततोन्योन्याश्रयोनकिं ॥ ७५ ॥

शाअहमज्ञइतिप्रत्यक्षाद्ब्रह्मण्यज्ञानंसिद्ध्यतीत्यभिसंधिः । तथाच प्रमाणमन्यत्र प्रमेयमन्यत्रेत्यसंगतिरेव। अतोब्रह्मैवस्वाज्ञानवशात्संसरतीत्यादिप्रमेयमप्यसंगतमेवेतिभावः ॥ ७३ ॥ ऐक्या जीवब्रह्मणोरैक्यात् तदेव जीवाज्ञानप्रत्यक्षमेव ब्राह्मं ब्रह्मसंबंधि ब्रह्माज्ञानप्रत्यक्षंचेदितिसंबंधः। तदाऽन्योन्याश्रयतास्यादित्यर्थः ॥ ७४ ॥ तामेवदर्शयति। ऐक्यसिद्धौजीवब्रह्मणोरैक्यसिद्धौ ब्रह्म जीवाज्ञानप्रत्यक्षात्स्वयमप्यज्ञ मज्ञानाधिकरणंभवेत्। तस्यब्रह्मणः अज्ञतावशात् जीवभावे जीवत्वेजातेसति ऐक्यं

जीवैक्यंभवेत् । परमतेब्रह्मणोऽज्ञानवशाज्जीवभावेजातेहिजीवैक्यं । अनेनाज्ञानाकल्पितस्स्वाभाविकोजीवश्चेत्कथंतेनैक्यंसंभाव्येतापीतिसूचितं।तथाचब्रह्मण्यज्ञानेसिद्धे तस्योपजीव्यैक्यसिद्धिः।जीवैक्येसिद्धे जीवाज्ञानप्रत्यक्षमेवब्रह्माज्ञानप्रत्यक्षमितितस्मिन्ब्रह्मण्यज्ञानसिद्धिरित्यन्योन्याश्रयइतिभावः । वस्तुतस्तुनेदंमायावादिनांमतं। तैर्व्यावहारिकभेदेनतत्तद्व्यवहारासंकरस्यैवांगीकरात् अन्यथाजीवाज्ञानमतंब्रह्माज्ञानमतमितिमतद्वैविध्यमेवनसिद्ध्येत् । उपाधेःप्रतिबिंबपक्षपातित्वंवदतातेनाबिंबधर्माःप्रतिबिंबेआनेतुंशक्यंते नतुप्रतिबिंबधर्मोबिंबे । नहिप्रतिमुखमालिन्यंमुखेपिव्यवह्रियते । अतोजैवव्यवहारस्यब्रह्मण्यानयनंस्वमतविरुद्धमि

तान्यहंवेदसर्वाणीत्युक्त्याकृष्णस्यसर्वदा ॥ अस्तिसर्वज्ञताध्यक्षंनत्व
ज्ञानापरोक्षधीः ॥ मनसाध्यातमेवार्थंवदेद्वाचाकिलाखिलः ॥ ७६ ॥

त्यपिद्रष्टव्यं । वक्ष्यतिचैतद्ग्रंथकारस्स्वयमेव ॥ ७५ ॥ प्रकारांतरेणापिजैवप्रत्यक्षंनब्रह्मणिनेतुंशक्यतइतिसाहित्यमुद्रयोपपादयति ॥ तान्यहमित्यादिना ॥ उक्त्या गीतोक्त्या । सर्वज्ञताध्यक्षं सर्वज्ञोहमितिप्रत्यक्षं । अज्ञानापरोक्षधीः अज्ञोहमित्यपरोक्षधीःनत्वितियोजना । सर्वज्ञत्वासर्वज्ञत्वाभ्यांविरुद्धधर्माभ्यांव्यावहारिकभेदमंगीकुर्वन्परोपिइदमंगीकरोत्येव । उपपादनंतुयुक्तिवैभवादितिद्रष्टव्यं अखिलोजनःमनसाध्यातमपरोक्षीकृतंवाचावदेत् । किलेत्यनेन यद्धिमनसाध्यायतितद्वा चावदतीतिश्रुतिं सूचयति । वाचावदतोमानसोनुभवःकथंज्ञातइत्याशंकापरिहारार्थमिदं ॥ ७६ ॥ अतः भगवतःसार्वज्ञ प्रत्यक्षसिद्धेः सर्वज्ञताप्र 

त्यक्षाख्यहर्यक्षस्य सिंहस्यगुहां भगवद्धृदयगुहां जैवी जीवसंबंधिनी अज्ञानप्रत्यक्षमृगी । विविक्षतिप्रेवष्टुमिच्छति । यथासिंहगुहांहरिणीप्रवेष्टुंनशक्नुते तथानिरवद्यभगवत्प्रत्यक्षेणसर्वज्ञतयासिद्धेभगवन्मनसि अज्ञोहमितिजीवप्रत्यक्षं नाज्ञानमाधातुंशक्नुत इतिभावः । बलात्केनचिन्नीताचेत् प्रबलप्रत्यक्षबाधिता अप्रामाण्याख्यमरणं हरिणीवप्राप्नुयादितिभावः ॥ ७७ ॥ प्रत्यक्षमेषयोस्सर्वज्ञत्वासर्वज्ञत्वविषयकप्रत्यक्षमेषयोः । मेषयोरित्युक्त्योभयोरपिप्रत्यक्षयोस्स्वस्वविषयेस्वार्थसाधनसामर्थ्यंसूचयति । हरिणीति परसदननिविष्टःकोलघुत्वंनयातीतिन्यायेनभगवद्गुहाप्रवेशभीरुत्वादेवोक्तं । नतुस्वविषयेप्यासामर्थ्यादितिभावः । तयोर्युद्धे

अतस्सर्वज्ञताध्यक्षहर्यक्षस्यगुहामिमां ॥ अज्ञानाध्यक्षहरिणीजैवीनैवविवक्षति ॥ ७७ ॥
प्रत्यक्षमेषयोर्युद्धेतत्चैक्यंजंबुकायते ॥ तस्माद्ब्रह्माश्रिताज्ञानप्रत्यक्षंमरणेपिन ॥ ७८ ॥

ब्रह्मण्यज्ञानमानेतुंनमुंचामि जीवेसार्वज्ञमानेतुंनमुंचामीतिपरस्परकलहे । प्रबलप्रत्यक्षद्वयसिद्धसार्वज्ञासार्वज्ञरूपविरुद्धधर्माक्रांतयोरितिफलितोर्थः । ऐक्यं त्वयोच्यमानजीवब्रह्मैक्यं जंबुकायते जंबुकवदाचरति । यथामेषयोश्शिरस्ताडनसमये रक्ताशया तन्मध्येपतितःजंबुकोम्रियते तथाविरुद्धप्रत्यक्षसिद्धसार्वज्ञासार्वज्ञाख्यव्यावर्तकधर्मप्रतिहतमैक्यंच तयोरुभयो र्मुंडनेसतिजीवामीत्यागतंस्वयमेवनश्येदित्यर्थः । प्रमाणसिद्धभेदयोरैक्यस्यैवायोगादन्यप्रत्यक्षस्यान्यत्राकर्षणंदुश्शकमितिहृदयं । उपसंहरति ॥ तस्मादिति ॥ मरणेपिन मरणपर्यंतंशास्त्रपर्यालोचनेकृतेपिन साधितुंनशक्यतइत्यर्थः ॥ ७८ ॥ ज्ञानरूपेब्रह्मणि कथमज्ञानंघट

युक्ति- तइतिशंकापरिहाराय दुर्घटत्वमविद्यायाभूषणंनतुदूषणमितियत्परेणोक्तंतदपिनिर्मूलमित्याह ॥ प्रत्यक्षेणेति ॥ ज्ञानरूपिणोब्र मल्लिका
॥ १५ ॥ ह्मणः अज्ञतासिद्धौअज्ञानसिद्धौसत्यां अविद्यादुर्घटत्वेनघटना ज्ञानाज्ञानयोरेकत्रावस्थासंपादनं ॥ ७९ ॥ अज्ञोहमितिप्रत्यक्षेण शुद्धिसौ०
भगवति तस्याज्ञानस्यासिद्धौ प्रत्युतश्रौतस्यसर्वज्ञइतिश्रुतिसिद्धस्य । श्रौतस्येत्युपलक्षणं । तान्यहंवेदसर्वाणि सर्वदृगुपद्रष्टेत्या
दिस्मृतिसिद्धस्येत्यपिग्राह्यं । सार्वज्ञस्यानुभवेएवसति । एवपदेनाज्ञानानुभवंव्यावर्तयति । उपयंतुः अविद्यामंगीकुर्वतइतिया
वत् । ज्ञानरूपेभगवतिअज्ञानप्रवेशोहिदुर्घटत्वादिनाभूषणंकर्तव्यं । तस्यैवाभावादितिभावः । जीवेऽविद्यायास्त्वयैवानंगीकारा

प्रत्यक्षेणाज्ञतासिद्धौब्रह्मणोज्ञानरूपिणः ॥ अविद्यादुंर्घटत्वेनघटनास्यात्कथंचन ॥ ७९ ॥
तदसिद्धौश्रौतसार्वज्ञस्यैवानुभवेसति ॥ उपयंतुरभावात्तेकुमारीभूषणंवृथा ॥ ८० ॥
मायांव्युदस्यचिच्छक्त्येत्युक्तिश्वश्रूःक्षणेक्षणे ॥ उदूढामर्पितांकन्यांहन्यादेवेतिमेमतिः ॥ ८१ ॥

त् । ब्रह्मणिचत्वदुक्तप्रत्यक्षस्याभावेनप्रवेशयितुमशक्यत्वात् उपयंतुरभावादित्युक्तं । तेतवाभिमताविद्याख्यकुमारीभूषणं
दुर्घटघटकत्वाख्यकर्णभूषणंवृथा । अविद्यायादुर्घटघटकत्वशक्तिकल्पनंव्यर्थमेवेतिभावः ॥ ८० ॥ उदूढां स्वरूपज्ञानस्या
ज्ञानाविरोधित्वमित्याद्यनृतवचनेनविवाहितां बलात्प्रवेशितामितियावत् । यथाशूद्रीपरिणयनंब्राह्मणस्यनोचितमितिन्यायं ॥१५०॥
पामरब्राह्मणविषयंकृत्वावैदिकेब्राह्मणेनदोषइतिदत्तांशूद्रीमिव तांकन्यां । मायांव्युदस्यचिच्छक्त्याकैवल्येस्थितआत्मनी

तिभागवतोक्त्याख्यश्वश्रूः । एताद्दशकुयुक्तिभिरज्ञानाख्यपंकेनिमज्जितस्यभगवतः तस्मादज्ञानादुद्धृत्यसर्वज्ञतयापुनःप्रसवा तृश्वश्रूरित्युक्तं । वरप्रसवित्रीहिश्वश्रूरित्युच्यते । चिच्छक्त्यामायांव्युदस्येतिस्वरूपज्ञानशक्त्यैवमायानिर्हरणसामर्थ्यस्यप्रतिपाद कत्वात् क्षणेक्षणेतवकन्यामविद्यांहन्यात् । एतद्वचनबलात्स्वरूपज्ञानस्यैवाज्ञानविरोधित्वकथनात् मायावाद्युक्तानृतवाचाप्रवे शितामपितांपरमात्मनोगृहादेवबहिष्कुर्यादितिभावः । नयत्रमायेतिवैकुंठादेरपितयैवबहिष्कृतत्वात् । क्षणेक्षणेइत्यनेन नयत्रश्रू यतेमाया विलज्जमायेत्यादिवाक्यानिसूचयति ॥ ८१ ॥ स्वानर्हालंकृतिं अविद्यातोपिविद्यारूपतयाप्रबलायास्स्वस्याअप्यनर्हां

स्वानर्हालंकृतिंतस्यास्सहेतकथमैश्वरीं ॥ नापिजीवस्ययोग्येयमन्योन्याश्रयदोषतः ॥ ८२ ॥

जीवोह्यज्ञानकल्प्यस्तेसोज्ञानस्यकथंमही ॥ नहि भार्यैवभर्तारंसूतेयत्नशतैरपि ॥ ८३ ॥ जीव

सिद्धौतदाधारमज्ञानंतेप्रसिद्ध्यति ॥ अज्ञानसिद्धौतत्कल्प्योजीवस्सिद्ध्येन्नचान्यथा ॥ ८४ ॥

दुर्घटघटकत्वाख्यालंकृतिं । ऐश्वरीं कर्तुमकर्तुमन्यथाकर्तुंसमर्थस्येश्वरस्यैवयोग्यां तस्याअविद्यायाः कथंसहेत । ईश्वरादन्यत्रदु र्घटघटकत्वंश्रुतिर्नसहतइतिभावः । प्रमाणाभावात्प्रबलप्रत्यक्षविरुद्धत्वाच्चब्रह्मण्यज्ञानंनिराकृत्यपरमतेजीवेष्यज्ञानंनघटतइत्याह ॥ नापीति ॥ ८२ ॥ अन्योन्याश्रयमुपपादयति ॥ जीवइति ॥ हियस्मा त्तवमते योजीवःअज्ञानकल्पितः सःअज्ञानस्य मही आश्रयःकथं । तत्रद्दष्टांतः ॥ नहिभार्येति॥ भार्या भर्त्राधर्तुंयोग्या भर्तुरुत्तरकालीनेतियावत् ॥ ८३ ॥ अन्योन्याश्रयप्र कारंदर्शयति ॥ जीवसिद्धाविति ॥ अन्यथा अज्ञानंविना । अस्मद्वत्स्वाभाविकजीवानंगीकारादितिभावः ॥ ८४ ॥ अन्यथा

युक्ति- नेत्येतद्विवेचयति ॥ यद्यज्ञानमिति ॥ स्वतस्स्वभावतः । ईश्वरस्यैवाज्ञानवशाज्जीवभावानुक्तौस्वभावतएवसत्त्वे परस्परनिरपे मल्लिका
॥ १६ ॥ क्षतयाऽनादितस्स्वभावतएवसतोरुभयोरपिकालाकाशयोरिवसत्योभेदः कथंनसिद्ध्येदितिभावः । जीवस्यब्रह्मभावेहिभेदस्यबाधः शुद्धिसौ०
परेणवक्तव्यः । तदज्ञानाकल्पितस्यचतद्भावोघटस्यपटभावइवकदापिनस्यात् । तस्मादबाधितोभेदइत्यर्थः । तस्मा द्भेदकस्यतव मतेआवश्यकत्वात् । नन्वंतःकरणाद्युपाधिनाजीवोभविष्यति । अतःकथमन्योन्याश्रयइतिचेत् । न । तस्याप्यज्ञानकल्पितत्वेना

यद्यज्ञानंविनैवस्याज्जीवोनादिस्स्वतस्तदा ॥ सत्योजीवेशभेदस्स्यात्तस्मादज्ञानकल्पितः ॥
जीवोऽवश्यंत्वयावाच्यःकथंनान्योन्यसंश्रयः ॥ ८५ ॥ जीवोपाधिरविद्यैवलयेसुप्तौच
र्तनात् ॥ ८६ ॥ अनादित्वेनानवस्थादोषस्यस्यात्क्वचिच्छमः ॥ अन्योन्याश्रयदोषस्तुक्षो
ण्यांशून्यप्रतिक्रियः ॥ यदंकुराद्धियद्बीजंकिंतद्बीजात्तदंकुरः ॥ ८७ ॥ ॥

न्योन्याश्रयस्यचक्रकस्यवाऽपरिहारात् ॥ ८५ ॥ किंचाविद्यैवजीवोपाधिस्तवमते नातःकरणमित्याह ॥ जीवोपाधिरिति ॥ लयेप्रलयेसुप्तौच वर्तनात् अविद्यायाविद्यमानत्वात् । अंतःकरणादेस्तदाऽभावाच्चेत्यर्थः ॥ ८६ ॥ अनवस्थातोप्यन्योन्याश्रयः प्रबलदोषइत्याह ॥ अनादित्वेनेति ॥ क्वचित्प्रामाणिकत्वेसतीत्यर्थः । शमःपरिहारः । बीजांकुरानवस्थायाःप्रामाणिकत्वेनस ॥ १५१ ॥
वैरदोषत्वांगीकारात् । शून्याप्रतिक्रियापरिहारोयस्यसः । तदेवदर्शयति ॥ यदंकुरादिति ॥ यस्मादंकुरात्यद्बीजं कलमादि

बीजं तद्बीजात् तदंकुरजन्यतद्बीजात् सचासावंकुरश्चतदंकुरः भवतिकिं नेत्यर्थः । अतोपरिहार्योन्योन्याश्रयइतिभावः ॥ ८७ ॥ अज्ञानप्रत्यक्षदूषणमुपसंहरति ॥ तस्मादिति ॥ पांडित्यशून्येतिपरंप्रतिसंबुद्धिः । पूर्वोत्तरप्रमेयस्यजीवप्रत्यक्षस्यब्रह्मण्यानय नात् । अविद्यायाः पूर्वोत्तरप्रमेयज्ञानाभावरूपाज्ञानस्येत्यर्थः । अहमज्ञइतिप्रत्यक्षस्यत्वन्निष्ठपूर्वोत्तरप्रमेयानभिज्ञत्वैवविषयइति भावः ॥ ८८ ॥ एक्याज्जीवप्रत्यक्षमेवब्रह्मप्रत्यक्षमित्यंगीकारेसर्वव्यवहारोच्छेदस्स्यादित्याह ॥ एकाज्ञानइति ॥ नचेत्

तस्मादविद्याप्रत्यक्षंमन्ये पांडित्यशून्य ते ॥ पूर्वोत्तरप्रमेयस्याविद्यायाएवसाधकं ॥ ८८ ॥ एकाज्ञानेपिसर्वो
ज्ञस्स्यादैक्यबलतोनचेत् ॥ एकदुःखेपिदुःख्यन्यस्स्यादैक्यस्यसमाश्रयात् ॥ एकानुभूतिस्सर्वस्येत्यागतोजा
तिसंकरः ॥ ८९ ॥ व्यावहारिकभेदेनसमाधानेत्विदंगतं ॥ एकंसंधित्सतःपुच्छमपरंच्यवतेतव ॥ ९० ॥
अतोनुभवमाश्रित्यजीवाज्ञानेमतंगतं ॥ ऐक्येनतमतिक्रम्यब्रह्माज्ञानेमतंगतं ॥ ९१ ॥ ॥

व्यावहारिकभेदेनव्यवस्थानचेत् । एकस्यपुरुषस्याज्ञाने प्यैक्यबलतस्सर्वोप्यज्ञस्स्यात् । एकदुःखे एकस्यदुःखे ऐक्यबलाद न्योपिदुःखीस्यात् । एकानुभूतिः एकस्यचंडालादेः अनुभूतिःस्वरूपाद्यनुभवः सर्वस्यब्राह्मणादेश्चैक्यबलतस्स्यात् ॥ ८९ ॥ इदं जीवाज्ञानप्रत्यक्षेणब्रह्मण्यज्ञानकल्पनं । तथाचेदमाभाणकमापतितंत्वयीत्याह ॥ एकमिति ॥ तव दीर्घकौपीनरहितस्य एकंपुच्छंकौपीनपुच्छं अपरं पुच्छांतरं ॥ ९० ॥ एतदेवदार्ष्टांतिकेदर्शयति ॥ अतइति ॥ अनुभवमज्ञोहमित्यनुभवं मतं ब्रह्म

युक्ति- ज्ञानमतं । ऐक्येन तंजीवाज्ञानपक्षं । मतं व्यावहारिकभेदमंगीकृत्यतत्रव्यवस्थासंपादनंमतं ॥ ९१ ॥ मतहानिप्रकारमेवलेशतोदर्श मल्लिका
यति ॥ जीवइति ॥ अज्ञःअज्ञानवान् । सःजगत्कर्तान । यःपरमेश्वरः । तस्यपरमेश्वरस्याज्ञता अज्ञानवत्ता । अतोजग शुद्धिसौ०
॥ १७ ॥ तोऽज्ञानकल्पिततत्वकथाव्यर्थेतिभावः । अतः उक्तन्यायात् । अज्ञानभ्रमायोगात् अज्ञानारोपायोगात् । शास्त्रकृतः अज्ञानारो
पितत्वशास्त्रकृतः भ्रांतिः असंभवदारोपेआरोपितत्वभ्रांतिः । कथंचि दविचारितरमणीयतया भ्रमयोगेऽज्ञानारोपयोगे
शास्त्रकृतः ब्रह्मण्यज्ञानमितिशास्त्रकृतस्तवैवभ्रांतिः । अज्ञोहमितित्वदभिलषितारोपादपिजीवएवाज्ञानसिद्धेरितिभावः

जीवोज्ञोनजगत्कर्तायःकर्तातस्यनाज्ञता ॥ अतोऽज्ञानभ्रमायोगाद्भ्रांतिश्शास्त्रकृत
स्तव ॥ कथंचिद्भ्रमयोगेपिभ्रांतिश्शास्त्रकृतस्तव ॥ ९२ ॥ जीवानुभूतमज्ञानंसर्वज्ञेके
ननीयते ॥ हा(बस्त)वत्सगलरज्ज्वैवदिग्गजंबद्धुमिच्छसि ॥ ९३ ॥ जीवसर्वस्वमज्ञा
नंत्वंराज्ञेदातुमिच्छसि ॥ नतद्दरिद्रवित्तंसमहाराजोदिदृक्षति ॥ ९४ ॥ ॥

॥ ९२ ॥ उक्तप्रमेयंसर्वस्यापिबुद्ध्यारोहायसाहित्यमुद्रयादर्शयन्बाधकांतरंचाह ॥ जीवेति ॥ अनुभूत मज्ञोहमितिप्रत्यक्षसिद्धं।
सर्वज्ञेब्रह्मणि । सर्वज्ञइत्यनेनाज्ञानासंभवंसूचयति । केनप्रमाणेन । प्रत्यक्षस्यजीवएवाज्ञानसाधकत्वा त्सर्वज्ञेऽज्ञानस्यव्याहतत्वा
च्च । अत्यसंभावितमिदंप्रमेयमित्यत्रदृष्टांतमाह ॥ हावत्सेति ॥ वत्सगलरज्ज्वा वत्सगलबंधनसूक्ष्मरज्ज्वा । हाकष्टं । एवमेवा ॥ १५२ ॥
ल्पकेजीवेबंधकमज्ञानं नित्यमुक्तेसर्वेश्वरेत्वमपिनयसि । अतोसंभावनापराहतमितिभावः ॥ ९३ ॥ प्रकारांतरेणाप्यसंभावनांदर्श

यति ॥ जीवेति ॥ दरिद्रवित्तं दरिद्रस्यजीवस्यवित्तं तदज्ञानं । दिदृक्षतिद्रष्टुमिच्छति । दिदृक्षतीत्यनेन विलज्जमानयायस्य
स्थातुमीक्षापथेमुयेतिस्मृतिंसूचयति । इदमेकंबाधकं ॥ ९४ ॥ साहित्यमुद्रयैवबाधकांतरंचाह ॥ अनादिमाययेति ॥ इतिश्रु
तिसती जीवेऽज्ञानसाधकत्वेनजीवपक्षपातिनीश्रुतिनारी । त्वां जीवाज्ञानंब्रह्मणोदातुंनयंतं । अध्वनिमार्गे । ब्रह्मणिस्थापनात्पू
र्वमेवेत्यर्थः । यथादरिद्रगृहात्वित्तापहारंकृत्वागच्छंतंतद्गृहस्थनारीरुणद्धितथेतिभावः । जीवाज्ञानसाधकश्रुतेरतिस्पष्टत्वात्
अजमनिद्रमितिवेद्येब्रह्मणि निद्रापदोदिताज्ञानस्यचस्पष्टंनिषेधाच्चाध्वनीत्युक्तं । जीवाश्रितमज्ञानमित्येवानुक्त्वा स्पष्टंब्रह्मणिनेत्य

अनादिमाययासुप्तोयदाजीवःप्रबुध्यते ॥ इतिश्रुतिसतीसाध्वीत्वामध्वनिरुणद्धिच ॥ ९५ ॥
संपूर्णस्वसुखज्ञानेसंसारोमुक्तिरेवते ॥ तदज्ञानेतुनाज्ञानबोधोऽवच्छेदकोह्यसौ ॥ ९६ ॥ अह
मंशे नतेऽज्ञानंकिंत्वानंदादिकेपरं ॥ यद्भातंनतदज्ञातमितिवाक्यमनुस्मर ॥ ९७ ॥ ॥

पिनिषेधाच्छ्रुतेश्चमत्कारःराजमार्गइवसर्वैर्दृश्यतइतिभावः ॥ ९५ ॥ ज्ञानाभावपक्षेप्रतियोगिज्ञानेऽज्ञानेचनज्ञानाभावोवक्तुंशक्य
तइतिदूषणंतवापिसममित्याह ॥ संपूर्णेति ॥ संपूर्णस्वसुखं आत्मस्वरूपसुखं तस्येदानींज्ञानेऽनुभवे ते संसारोमुक्तिरेवस्यात् ।
अनवच्छिन्नानंदानुभवोहिमुक्तिः । तदज्ञाने तस्यसुखस्याज्ञाने अज्ञानबोधोन । असौस्वरूपानंदः अवच्छेदकोहि । स्वरूपानंदंन
जानामीत्यज्ञानं अवच्छेदकज्ञानंविनाकथंस्यात् । स्वरूपज्ञानस्याज्ञानाविरोधित्वंवदतापिसाक्षिणास्वरूपभूतानंदानुभवोनेदानीं
वक्तुंशक्यः ॥ ९६ ॥ एतदेवोपपादयति ॥ अहमंशइति ॥ तेअज्ञानंनेतिसंबंधः । परंत्वानंदादिकएवाज्ञानं । तत्रहेतुर्यद्भात

मिति ॥ यद्ज्ञातंनतदज्ञातमितितत्वदीपनोक्त्या ज्ञातेंऽशेऽज्ञानस्यत्वयाप्यनंगीकारादितिभावः ॥ ९७ ॥ उपसंहरति ॥ अत इति ॥ अवच्छेदकस्य तस्यानंदस्य ज्ञाने साक्षिणानुभवे । अपुनर्भवोमोक्षः । भावरूपाज्ञानेज्ञानाभावेचा वच्छेदकज्ञानाभावइ तिदूषणमुभयोरपिसमं ॥ ९८ ॥ कस्तर्हिपरिहारइतिसुहृद्भावेनपृच्छंतंप्रत्याह ॥ यथेति ॥ चक्षुषस्सर्ववस्तुनोघटपटादेर्ग्रहणे । आलोकसहकृतचक्षुर्ग्राह्यत्वांगीकारात् । चक्षुषातमसोग्रहणे । सःआलोकपुरस्कारः ॥ ९९ ॥ यत्रयत्रचक्षुषास्वार्थग्रहणं तत्रालो

अतोवच्छेदकज्ञानाभावान्नाज्ञानधीस्तव ॥ अवच्छेदकतज्ज्ञानेभवएवापुनर्भवः
॥ ९८ ॥ यथालोकपुरस्कारश्चक्षुषस्सर्ववस्तुनः ॥ ग्रहणेप्यस्तितमसोग्रहणेतुसने
ष्यते ॥ ९९ ॥ सिद्धव्याप्तेस्तुसंकोचोविरुद्धत्वाद्धिकेवलं ॥ अत्रापितत्पुरस्कारेन
स्यादज्ञानमेवहि ॥ १०० ॥ अतोव्याप्तेश्चसंकोचंकृत्वासामान्यतोग्रहः ॥ वाच्योऽव
च्छेदकादीनामज्ञानंतुविशेषतः॥इतिसर्वैस्समाधेयंत्वंसर्वेभ्योबहिष्कृतः ॥ १०१ ॥

कपुरस्कारइतिलोकसिद्धव्याप्ते र्विरुद्धत्वात् । आलोकेसतितमसएवायोगात् तमोग्रहणेप्यालोकापेक्षणे तमसस्स्वरूपस्यैवना शात्तन्मात्रेतदनपेक्षणं । तथात्रापि अज्ञानज्ञानेपि तत्पुरस्कारे अज्ञानावच्छेदकप्रतियोग्यादिज्ञानानुसरणे अज्ञानमेवनश्येत् । ज्ञानेसत्यज्ञानायोगात् ॥ १०० ॥ अतोव्याप्ते रवच्छिन्नज्ञान मवच्छेदकज्ञानसापेक्षमितिव्याप्तेः । सामान्यतोग्रहः सामान्यतो-

ज्ञानं अज्ञानंतु तद्विशेषतइत्येवक्तव्यं । स्वोपरिपततोवृक्षस्यछेत्तात्वंसर्वेभ्योबहिष्कृतः सकलविद्वद्भ्योबहिर्भूतः ॥ १०१ ॥ ज्ञाना विरोध्यज्ञानं । ज्ञानेसति सुखादिज्ञानेसति कुतोनतत् अज्ञानं विरोधिचेत्ज्ञानविरोधिचेत् परन्यायतरोः परस्यप्रतिवादिनोन्यायत रोःत्वंमूलसेचकः । परस्यैवत्वयापिसमाधानस्यवक्तव्यत्वात् ॥ १०२ ॥ प्रतियोगिनोज्ञानभावाभावाभ्यां ज्ञानाभावज्ञानंदूषय न्मायावादीप्रष्टव्यः । किमेवंवदतस्तवमतेज्ञानात्यंताभावएवनास्ति । उतास्तीति । आद्यस्योत्तरमाह ॥ ज्ञानाभावेति ॥ ज्ञाना भावपदार्थस्य ज्ञानात्यंताभावपदार्थस्य । तर्ह्यत्यंताभावशून्यंतज्ज्ञानंब्रह्मवत्परमार्थसत्स्यात् । अत्यंताभावप्रतियोगित्वस्यैवमि

ज्ञानाविरोधितेऽज्ञानंज्ञानेसतिकुतोनतत् ॥ विरोधिचेत्परन्यायतरोस्त्वंमूलसेचकः ॥ १०२ ॥
ज्ञानाभावपदार्थस्यसर्वथाऽभावएवचेत् ॥ अत्यंताभावशून्यंतज्ज्ञानंस्यात्परमार्थसत् ॥ १०३ ॥
विद्यमानस्यचार्थस्ययथासंभवमेवधीः ॥ किंजात्यंधमतेनास्तिचित्ररूपवतीक्षितिः ॥ १०४ ॥

थ्यात्वात् । अत्यंताभावाभावेतत्प्रतियोगित्वस्यसुतरामभावेनसत्यत्वापरिहारादितिभावः ॥ १०३ ॥ द्वितीयस्योत्तरमाह ॥ वि द्यमानस्येति ॥ सर्वथाऽज्ञातस्यवस्तुनोसंभवादितिभावः । तत्रदृष्टांतमाह ॥ किंजात्यंधेति ॥ नानारूपवती अंधस्यरूपज्ञान वत् तवमतेतज्ज्ञानासंभवांगीकारेपि चक्षुष्मतामिवविवेकिनांमते सर्वथाऽज्ञातेवस्तुनिप्रमाणाभावाद्विद्यमानस्यज्ञानात्यंताभाव स्यज्ञानमपिघटनीयमितिभावः । अंगीकृत्येदमुदितं । वस्तुतस्तुज्ञानेऽत्यंताभावप्रतियोगित्वरूपमिथ्यात्वबोधायात्यंताभावस्यापि

बोद्धव्यत्वादितिद्रष्टव्यं ॥ १०४ ॥ सौहार्देनोक्तमुत्तरमनंगीकुर्वतःप्रतिबंद्याउत्तरमाह ॥ अज्ञानस्येति ॥ दौर्घट्यं ज्ञानेसत्य प्यावरकत्वरूपं । तथातज्ज्ञानदौर्घट्यं तस्य ज्ञानाभावरूपाज्ञानस्य यज्ज्ञानं ज्ञानाभावज्ञानमितियावत् । दौर्घट्यं प्रतियोगिज्ञा नाभावेपिज्ञातत्वरूपदौर्घट्यं ॥ १०५ ॥ कुंडलद्वयवान्अविद्यादुर्घटत्वाख्यभूषण ज्ञानदुर्घटत्वाख्यभूषणद्वयवान् । शास्त्ररूप तयाकर्णयोग्यत्वात्कुंडलेत्युक्तं । ज्ञानाभावज्ञानस्यास्य ज्ञानाभावविषयकाज्ञाननिवर्तकत्वावश्यंभावेनदुर्घटहंतृत्वादत्यंतदुर्घटत्व

अज्ञानस्यहिदौर्घट्यंयथातेभूषणंसदा ॥ तथातज्ज्ञानदौर्घट्यमपिभूषणमस्त्विदं ॥ १०५ ॥
किमेककुंडलत्वेनकुंडलद्वयवान्भव ॥ दुर्घटस्यहियोहंतासस्यादत्यंतदुर्घटः ॥ १०६ ॥
किंचभावाज्ञानवादेदुर्घटत्वंयथेष्यते ॥ अभावाज्ञानवादेपिदौर्घट्यंतद्वदिष्यतां ॥ १०७ ॥
अज्ञानत्वाविशेषेणद्वयोरपिसमत्वतः ॥ पक्षपातेहेत्वभावात्पक्षपातोभवेत्तव ॥ १०८ ॥
नित्यज्ञानमतेज्ञानसामान्याभावएवन ॥ चक्षुषाब्रह्मविज्ञानस्याभावोऽज्ञानमुच्यते ॥ १०९ ॥

माश्रयणीयमित्याह ॥ दुर्घटस्यहीति ॥ हीत्यनेन समर्थगजस्यहंतुः सिंहस्यततोप्यतिसामर्थ्यंदृष्टमितिसूचयति ॥ १०६ ॥ ए वमपिज्ञानस्यदुर्घटत्वंनांगीकरोषिचेत् तर्हिभावरूपाज्ञानवत्ज्ञानाभावरूपाज्ञानएवदुर्घटत्वमस्त्वित्याह ॥ किंचेति ॥ १०७ ॥ द्वयोः भावाभावरूपाज्ञानयो स्समत्वतः अज्ञानत्वसाम्यात् । तवपक्षस्यसिद्धांतस्य पातः ॥ १०८ ॥ रीत्यंतरेणापिज्ञानाभाव ज्ञानेपरोक्तानुपपत्तिंपरिहरति ॥ नित्यज्ञानेति ॥ ज्ञानसामान्याभावःज्ञानत्वावच्छिन्नज्ञानाभावः । चेतनमात्रेसाक्षिरूपज्ञानस्य

सदासत्त्वात् ज्ञानसामान्याभावोनघटतइतिभावः । तर्हिप्रकृतेऽज्ञानंनामकिमित्यतआह ॥ चक्षुषेति ॥ अज्ञानमितिपदच्छेदः । ब्रह्मनजानामीतिवदतोपि चक्षुषातज्ज्ञानाभावोभिप्रेतोनतुसर्वथातज्ज्ञानाभावः । ब्रह्मपदेनपरोक्षरूपतज्ज्ञानस्यसत्त्वात् । उच्यत इत्यनेन अज्ञानपदस्यज्ञानविशेषाभावेप्रयोगोलोकरूढइतिसूचयति ॥ १०९ ॥ तत्रदृष्टांतमाह ॥ निष्किंचनेति ॥ निष्किंचन पदं नविद्यतेकिंचनेतिदरिद्रेप्रयुज्यमानंनिष्किंचनपदं वित्तविशेषाभाववाक् वस्त्रभोजनपात्राद्यतिरिक्तधनकनकादिबहुतरवस्तु विशेषाभाववाक् । तथाऽज्ञानपदं ज्ञानविशेषाभाववाचीतिपूर्वेणान्वयः । अस्त्वेवं प्रकृतेकिमायातमित्यतआह ॥ एवंचेति ॥

निष्किंचनपदंवित्तविशेषाभाववाग्यथा ॥ एवंचमानसंज्ञानंस्यादेवप्रतियोगिनः ॥ ११० ॥
परोक्षरूपंतज्ज्ञानंतदभावश्चनोच्यते ॥ ब्रह्मापरोक्षाभावेननजानामीतिवाक्तुसा ॥ १११ ॥
प्रत्यक्षवृत्तिवैरेपिनजानामीतितेयथा ॥ प्रत्यक्षवृत्त्यभावेपिनजानामीतिमेतथा ॥ ११२ ॥

प्रतियोगिनोब्रह्मज्ञानस्य तद्विशेषणीभूतब्रह्मणश्च मानसं मनःपरिणामरूपज्ञानंस्यादेव ॥ ११० ॥ तज्ज्ञानंप्रतियोगिज्ञानं परो क्षरूपं शब्दलिंगादिजन्यं नतुमनसाऽपरोक्षीकरणं । तदभावः प्रतियोगिनःप्रतियोगिविशेषणस्यब्रह्मणोवापरोक्षरूपज्ञानाभावः। सानजानामीतिवाक् ब्रह्मनजानामीतिवाक्तु ब्रह्मापरोक्षाभावेन ब्रह्मापरोक्षनिषेधिका । नतुतज्ज्ञानमात्रनिषेधिकेत्यर्थः ॥१११॥ नकेवलंलोकप्रसिद्ध्यादिनाऽज्ञानपदंज्ञानविशेषाभावपरं किंतुत्वद्रीत्यापीत्याह॥ प्रत्यक्षेति ॥ तेतवमते। प्रत्यक्षरूपवृत्तिवैरे अपरो

क्षरूपमनोवृत्तिवैरे विरोधेसत्यपि नजानामीतिवाक् ज्ञानमात्रनिषेधार्थकसामान्यवाक्। परोक्षज्ञानाविरोधितयांगीकृतेऽपरोक्षवृत्तिमात्रवैरिणितवभावरूपाज्ञाने नजानामीतिसामान्यवाग्यथाभवति तथामेममते प्रत्यक्षवृत्त्यभावेपि ब्रह्मापरोक्षज्ञानमात्राभावेपि नजानामीतिवाक्। अंगीकृत्येदमुदितं। वस्तुतस्तुतवपरोक्षज्ञानात्साक्षिरूपापरोक्षज्ञानाच्चज्ञानपदस्यसंकोचंकृत्वाऽपरोक्षवृत्तावेवप्रयोगः। नञश्च घटापरोक्षवृत्तिविरोधिनस्तमआदेःसंकोचंकृत्वाविरोध्येकदेशिनिभावरूपाज्ञानेप्रयोगइतिबहुसंकोचकल्पना। ममतुपरोक्षज्ञानमात्रात्संकोचइतित्वत्तोप्यतिलाघवमितिद्रष्टव्यं ॥११२॥ उपसंहरति ॥ अतइति ॥ अतः ब्रह्मनजानामीत्यत्रप

अतोममतेऽज्ञानज्ञानेदौर्घट्यमेवन ॥ ११३ ॥ दौर्घट्यमेकंभूषाचेत्किंनस्याद्भूषणांतरं ॥
परस्योत्तरमेवंचस्यादित्येवतदीरितं ॥ ११४ ॥ परासिनातिक्रूरेणयाह्यविद्याक्षता
पिन ॥ यतोब्रह्मचितानाशोनाज्ञानस्यभवन्मते ॥ ११५ ॥ ॥

रोक्षरूपप्रतियोगिज्ञानादेरंगीकारात्अपरोक्षरूपतज्ज्ञानमात्रनिषेधेनविरोधाभावात्। ममतेअज्ञानज्ञानदौर्घट्यमितिपदच्छेदः। अज्ञानज्ञाने दौर्घट्यंदुर्घटत्वं प्रतियोगिज्ञानमंगीकृत्यपुनस्तस्यैवनिषेधेसतिविरोधः। प्रतियोग्यादेःपरोक्षज्ञानमंगीकृत्य ब्रह्मापरोक्षज्ञानस्यैवनिषेधेविरोधगंधस्याप्यभावादितिभावः ॥ ११३ ॥ तर्हि तथातज्ज्ञानदौर्घट्यमपिभूषणमस्त्विदमितिकिमर्थंप्रागुत्तरंदत्तमित्यतः परस्योत्तरमेवंचवक्तुंशक्यमितियौक्तत्वादेवोक्तं। नतुस्वमतरीत्येत्याह ॥ दौर्घट्यमिति ॥ भूषणांतरं दौर्घट्याख्यभूषणांतरं। तत्ज्ञानदौर्घट्यं ॥ ११४ ॥ यच्चोक्तंब्रह्मस्वरूपभूतंज्ञानमज्ञानानाशकं। किंतुमनोवृत्तिरूपज्ञानमेवतन्नाशकमिति। ॥ १५५॥

तदपिन। मायांव्युदस्यचिच्छक्त्येतिस्मृतिविरुद्धत्वात्। युक्तिविरुद्धत्वाच्चनेत्याह ॥ परासिनेति ॥ याअविद्या अतिक्रूरेण अनाद्यनंततयाभ्रमप्रमादादिदोषैरच्छेद्येन परासिना परमात्मस्वरूपभूतज्ञानासिना। वैरिखड्गेनेतिध्वनिः। क्षता निवर्त्यापिन घातवतीतिध्वनिः। नेदंमयोच्यतइत्यतउक्तंयतइति ॥ यतः यस्मात्। भवन्मतेमायिमते ब्रह्मचिता ब्रह्मस्वरूपज्ञानेनाज्ञानस्यनाशोन। ततःक्षतानेतिसंबंधः। साअविद्या। स्वसंतानासिना आविद्यकत्वात्स्वसंतानरूपमनसोयावृत्तिःतदात्मकासिना मंदधारेण आशुतरविनाशिजडज्ञानतयामंदधारेणछिद्यतेकिलेतिसंबंधः। लीलयास्वपुत्रधृतशस्त्रेणेतिध्वनिः। अत्रापितत्संमति

स्वसंतानासिनामंदधारेणच्छिद्यतेकिल ॥ आविद्यकमनोरूपविद्ययानाशकीर्तनात् ॥ ११६ ॥
मनसोपिहिचिद्योगाच्छक्तिरर्थप्रकाशने ॥ अज्ञाननाशनेचस्याच्छक्तिस्तद्योगतःपरं ॥ ११७ ॥
नचेद्घटादितुल्यस्यजडस्यह्नितयंचन ॥ भूताविष्टाच्चभीतस्यभूतात्कथमभीतता ॥ ११८ ॥

माह ॥ आविद्यकेति ॥ विद्ययाज्ञानेन। जडाजडयोर्विरोधा दजडेनानश्यज्जडमज्ञानं स्वोत्पन्नेनजडमानसज्ञानेन नश्यतीत्येतन्मायिप्रमेयं वैरिशस्त्रेणाप्रतिहतोराजा स्वपुत्रधृतमंदधारखड्गेनमृतइतिवत्असंभावनापराहतमितिसाहित्यमुद्रयाध्वनितोर्थः ॥ ११५ ॥ ११६ ॥ स्वप्रक्रियाविरुद्धंचेदमितिभावेनोक्तंमनसोपीति ॥ मनसःअर्थप्रकाशनशक्तिः चिद्योगात् स्वरूपचित्संवलनात्। अज्ञाननाशनेच परंकेवलंतद्योगादेवशक्तिस्स्यात्। तत्प्रकाशनसमर्थस्यैवतदज्ञाननिबर्हणसामर्थ्यौचित्यात्। हीत्यनेन अन्यथाचित्संवलनांगीकारवैयर्थ्यंस्यादितिसूचयति ॥ ११७ ॥ विपक्षेबाधकमाह ॥ नचेदिति ॥ नचे च्चिदाहितशक्तिद्वयंन

चेत् घटादितुल्यस्यजडस्य मनःपरिणामस्य द्वितयं अर्थप्रकाशनशक्तिःअज्ञाननिवर्तनशक्तिश्चेतिद्वयं । अनेन विमतोमनोवृत्त्यंतर्गताऽचिदंशः नोक्तशक्तिद्वयवान् जडत्वाद्धटवदित्यनुमानरूपबाधकंदर्शयति । लौकिकदृष्टांतविरोधंचदर्शयति ॥ भूतेति ॥ भूतेनपिशाचेनाविष्टात्पुरुषाद्भीतः । अन्यत्स्पष्टं । एवंचिदाविष्टमनोनष्टमज्ञानं कथंमुख्यचितोननश्यतीतिदार्ष्टांतिकमपिसूचयति । तस्मादनादिनित्यसर्वविषयक स्वभजकसार्वज्ञप्रददिव्याज्ञानरूपस्यब्रह्मणः अज्ञानाविनाशकत्वांगीकरणं स्मृतिस्वप्रक्रियायुक्तिलौकिकदृष्टांतादिविरुद्धत्वादुपेक्षणीयमेव । नत्वविद्यायामसंभावितशक्तिघटनयासंघटनीयमितिभावः ॥ ११८ ॥ ब्रह्मणः

**सिद्धंपश्यतिचेद्ब्रह्मजगन्नभ्रमजंतव ॥ कल्पयित्वैवपश्येच्चेत्सर्वंस्यात्सार्वकालिकं ॥**
**आमुक्तेःकल्पकाज्ञानब्रह्मचैतन्ययोस्स्थितेः ॥ ११९ ॥ अतोदैनंदिनलयःकल्पांतप्र**
**लयोपिवा ॥ कथंस्यात्तस्यनित्यस्यदर्शनस्यनहिक्षयः ॥ १२० ॥ ॥**

अज्ञानाख्यदोषंपरिहृत्य ततएवपरिहृतमपिभ्रांतिलक्षणदोषंयुक्त्यंतरेणापिपरिहरति ॥ सिद्धमिति ॥ तवब्रह्म सिद्धंपूर्वंविद्यमानं जगदितिसंबंधः । भ्रमजं ब्रह्मणोभ्रमजन्यं । कल्पयित्वैव प्रागविद्यमानंजगत्स्वभ्रांत्याकल्पयित्वैवेत्यर्थः । सर्वंजगत्सार्वकालिकं कल्पनानंतरंसदाविद्यमानंस्यात् । तदेवोपपादयति ॥ आमुक्तेरिति ॥ कल्पकयोः दोषरूपतयाभ्रमरूपतयाचकल्पकयोःजगत्संपादकयोरज्ञानब्रह्मचैतन्ययोः । अज्ञानंचब्रह्मचैतन्यंचेतिविग्रहः ॥११९॥ अतःकल्पकसद्भावात् । दैनंदिनलयः चतुर्मुखस्यदिने

दिनेजायमानोलयः । कल्पांतलयः ब्रह्मकल्पप्रलयः । तस्यकल्पकस्य नित्यस्यब्रह्मस्वरूपतयानित्यस्य दर्शनस्यचैतन्यरूपजगद्भ्र मस्यक्षयोनहीतिसंबंधः । हीत्यनेनभ्रांतिसिद्धंवस्तुभ्रमनिवृत्त्यैवनिवर्तते । नान्यथेतिसूचयति ॥ १२० ॥ कालादृष्टादिसाधार णकारणाभावान्नभ्रमस्यसदातनत्वमितिशंकांपरिहरन्नुपसंहरति ॥ भ्रमकल्प्यमिति ॥ तेमते कालादृष्टादिकंसर्वंजगद्भ्रमकल्प्यं हि। भ्रमस्यचनित्यसिद्धत्वात्किंकिंनस्यात् । सर्वमपिस्यादित्यर्थः। जगदिवकालादृष्टादिकमपिभ्रमेणैवकल्पनीयंचेत् तदपियावद्भ्र ममनुवर्तमानमस्त्येवेतिकथंतदभावइतिभावः ॥ १२१ ॥ मायिनंतुमहेश्वरमितिश्रुत्याब्रह्मणिमायाश्रवणात् सर्वमिदंकल्प्यतइति

भ्रमकल्प्यंहिसर्वंतेकालादृष्टादिकंजगत् ॥ भ्रमस्यनित्यसिद्धत्वात्किंकिंनस्यात्स
दातव ॥ १२१ ॥ मायांतुप्रकृतिंविंद्यान्मायिनंतुमहेश्वरं ॥ गौरियंवाक्शुनीनेयं
पुच्छंतस्याविचारय ॥ यतःप्रकृतिरेवैषामायापुच्छेत्रगीयते ॥ १२२ ॥ ॥

शंकांसोपहासंपरिहरति ॥ मायांत्विति ॥ मायांतुप्रकृतिंविंद्यान्मायिनंतुमहेश्वरमितिइयंवाक् गौःगृष्टिः शुनीइयंवाक्न तत्र हेतुसूचनायगृष्टिरित्यनुक्त्वागौरित्येवोक्तं। गोशब्दस्यगृष्टिवाचोरुभयोरपिसमत्वात्गोत्वमेवसंभावितंनशुनीत्वमितिभावः। अत एव परमात्मनःजगत्कारणीभूतप्रकृतिनियामकत्वाख्यमहिमामृतमेवदोग्धि नतुस्वदंशनेनभगवतिअज्ञानरूपव्रणंसाधयतीतिध्व नितं। ननुश्लोकरूपस्यवाक्यस्यपादचतुष्टयवत्त्वात् कथंगोत्वमेवनिर्णीयतइत्यतआह ॥ पुच्छमिति ॥ तस्याःवाचःपुच्छं पुच्छव

त्पृष्ठलंबिनंअंशं । मायांतुप्रकृतिंविंद्यादितिवाक्यशेषमितियावत् । यतःपुच्छेएषामायाप्रकृतिरेवप्रगीयते । एवकारेणपराभिलषितानिर्वाच्याविद्यांव्यावर्तयति । एवंचेदंपुच्छं उक्तभगवन्महिमानुकूलतयाऋज्वेव नतुभगवन्महिम्नोवक्रं । एवंचपुच्छविचारणे ऋजुपुच्छतयागोत्वमेवास्याश्शोभतेनतुशुनीत्वंतल्लक्षकवक्रपुच्छाभावादितिभावः ॥ १२२ ॥ ननुमायायाःप्रकृतित्वेप्यप्राकृतस्य भगवतः प्राकृतत्वाख्यदोषस्स्यादित्यतआह ॥ यथेति ॥ यथास्वशालास्थितचक्रमादायतेनघटंसृजन्कुलालश्चक्रीस्यात् । तथा तयाप्रकृत्याख्यमायया जगत्सृजन्नपि मायीस्यात् । चक्रिपदवाच्यस्यकुलालस्यचक्रेणबंधाभाववत् मायिपदवाच्यस्यभगवतोमा

**यथाकुलालश्चक्रीस्यात्तथामायीतयासृजन् ॥ १२३ ॥ किंनकोशस्थवित्तेनधनीराजावनेचरः ॥ मतुपासर्वसर्वस्वंगलेतस्यननिक्षिप ॥ १२४ ॥ सर्वज्ञंखलुतद्ब्रह्मकथमज्ञानवद्भवेत् ॥ स्वरूपस्यसदादृष्टेस्सर्वस्यान्यस्यचांजसा ॥ १२५ ॥ ॥**

ययाबंधाभावात् । मायाबद्धत्वरूपप्राकृतत्वंकथंस्यादितिभावः ॥ १२३ ॥ अधुनामायिपदप्रयोगेपिभगवतोमायातिदूरत्वेदृष्टांतमाह ॥ **किंनकोशस्थेति** ॥ वनेचरःराजा कोशस्थवित्तेनधनीनाकिं । तत्स्वामित्वसंबंधेनभवत्येव । तस्यापिधनाधारत्वमेवास्त्विर्तिमंदाशंकांसोपहासंपरिहरति ॥ **मतुपेति** ॥ धनीतिमतुबर्थकेन्प्रत्ययबलात् सर्वसर्वस्वं गजतुरगादिसर्वसर्वस्वं तस्यराज्ञोगले ननिक्षिप । तथासतिराजमरणेनाराजकंराष्ट्रंस्यादित्युपहासः । अतश्श्रुतिरपिनत्वदभिलषितार्थसाधिका ॥ १२४ ॥  युक्त्यंतरेणापिभगवत्यज्ञानंनघटतइत्याह ॥ **सर्वज्ञमिति** ॥ तदेवसार्वज्ञ्यंविवृणोति ॥ **स्वरूपस्येति** ॥ स्वरूपस्यात्मस्वरूपस्य

अन्यस्यसर्वस्यजगतः सदादृष्टेः सर्वज्ञेनब्रह्मणादृष्टत्वादित्यर्थः । यत्रैवज्ञानंतत्रैवतदैवकथमज्ञानं । अतस्सर्वज्ञःअज्ञानवानितिमतंमातावंध्येतिवद्व्याहतमितिभावः ॥ १२५ ॥ नन्वसंगस्यब्रह्मस्वरूपभूतज्ञानस्यविषयसंगोविनाऽज्ञानंनघटतइतिसार्वज्ञ्यमेवाज्ञानमाक्षिपतीतिशंकामनूद्यदूषयति ॥ **असंगस्येति** ॥ अस्यार्थस्स्पष्टः । उत्तरंवक्तुंपृच्छति ॥ **सप्रष्टव्यइति** ॥ असंगस्याज्ञानंतत्तदर्थसंगसंपादकमितिवदन्प्रष्टव्यः किमज्ञानंसंधानकरण्याख्यौषधवदसंगयोस्संबंधकरणस्वभावं उतकांस्यादिपात्रखंडद्वयसंधायकत्रपुसीसादिवत् एकवारंद्रवीभूय पश्चाद्घनीभवत्स्वभावंवा । असंगयोस्संश्लेषकारिवस्तुद्विप्रकारकमेवदृष्टं । अज्ञानंच

**असंगस्ययतस्संगोविनाऽज्ञानंनयुज्यते ॥ अतस्सार्वज्ञमप्यज्ञानापेक्षमितियन्मतं ॥ १२६ ॥ सप्रष्टव्यःकिमज्ञानंसंधानकरणीतव ॥ किंवाद्रवत्वनिबिडत्वार्हसीसादिधातुवत् ॥ १२७ ॥ व्यापिनीचिन्ननेतव्यानानेतव्याचकेनचित् ॥ अतस्स्वतस्तत्तदर्थसंगस्तस्याभविष्यति ॥ १२८ ॥ असंगत्वश्रुतेर्भीतिस्तवापिचममापिच १२९**

नतादृशस्वभावमतःकथमसंगस्यब्रह्मणस्संगहेतुस्स्यादितिप्रश्नपद्यार्थः ॥ १२६ ॥ १२७ ॥ ब्रह्मचिद्दूरेतिष्ठति ॥ अर्थोपिदूरे ॥ अतस्तयोस्सर्पमंडूकयोरिवसंबंधघटनायाज्ञानमितिपक्षंदूषयति ॥ **व्यापिनीति** ॥ व्यापिनीसर्वत्रव्याप्ता चित्ब्रह्मचित् । नेतव्या इतोन्यत्रनेतव्यान । आनेतव्या अन्यतोत्रानेतव्याचनेतियोजना । अत स्सकलमूर्तद्रव्यसंगित्वात् । स्वतःस्वभावतएव तस्याःब्रह्मचितः ॥ १२८ ॥ असंगश्रुतिर्बाधिकेतिचेत्किमज्ञानेनतत्रोपायःक्रियते । नह्यज्ञानंतस्याःमुखमोटनंकर्तुंशक्नोति । अ

तच्छ्रुतितोभीतिरुभयोस्समेत्याह ॥ असंगत्वेति ॥ १२९ ॥ स्वभावतोऽसंगउपाधितस्तुससंगोभवतीतितवश्रुत्यर्थश्चेत् तर्हिम मउपाधितोसंगः । ब्रह्मचरित्रस्यनिरुपाधिकत्वात् । स्वभावतएवससंगइतिश्रुत्यर्थोभविष्यति । कथमन्यथासर्वव्यापित्वप्रतिपाद कश्रुतिर्जीवेदित्याह ॥ यदीति ॥ उक्तयुक्तितः भवदज्ञानाख्योपाधेस्संधानकरणादिस्वभावाभावाख्ययुक्तितइत्यर्थः ॥ १३० ॥ ब्रह्मण्यज्ञानसंगेखल्वन्यार्थसंघटकंतत्स्यात् । अन्यथातिप्रसंगात् । असंगश्रुतिस्संगत्वाविशेषादज्ञानसंगमपिनिषेधतीत्याह ॥ किं

यदिस्वभावतोऽसंगइत्यर्थस्स्याच्छ्रुतेस्तव ॥ ममाप्युपाधितोऽसंगइतिस्यादुक्तयु
क्तितः ॥ १३० ॥ किंचत्वदज्ञानतोपिसंगस्तस्यकथंवद ॥ यदसंगइतिश्रुत्यासर्व
संगोनिषिध्यते ॥ १३१ ॥ अथाज्ञानान्यसंगोनेत्यर्थेऽनर्थपरंपरा ॥ याश्रुतिर्निरनि
ष्टंतंनिरवद्यंचशंसति ॥ महाशक्तिमतस्तस्यसादोषंकिलशोषयेत् ॥ १३२ ॥

चेति ॥ यद्यस्मात् ॥ १३१ ॥ अज्ञानान्यसंगोनेत्यसंगश्रुतेरर्थः । तेनाज्ञानसंगंनसाश्रुतिर्निषेधतीतिपक्षमप्यनूद्यदूषयति ॥ अथेति ॥ अनर्थपरंपरामुपपादयितुमेकमनर्थंतावदाह ॥ याश्रुतिरिति ॥ याश्रुतिः निरनिष्टोनिरवद्यइत्यादिका । तंपरमात्मानं । तस्य परमात्मनः । साश्रुतिः । तत्सजातीयाअसंगश्रुतिरितियावत् । दोषं अज्ञानरूपदोषं । महाशक्तिमतइत्यनेनाज्ञाननिर्हरणसमर्थ त्वाख्ययुक्तिविरोधंसूचयति । अज्ञानान्यसंगरहितमित्यर्थकथनेनाज्ञानरूपदोषस्यब्रह्मण्यवशेषणेउक्तश्रुतियुक्तिविरोधइतिभावः

॥ १३२ ॥ अतःमहदादिजगदन्यसंगोनास्तीति ब्रह्मणि निषिद्धाज्ञानंसंप्रतिषिध्यसर्वेश्वरत्वादिभगवद्गुणपोषक दोषानाधायक जगदवशेषणंश्रेयइत्याह ॥ सर्वेश्वरत्वेति ॥ ईश्वरत्वंचकर्तृत्वंच ईश्वरत्वकर्तृत्वे सर्वस्येश्वरत्वकर्तृत्वे इतिविग्रहः । पोषयितुंपुष्टीकर्तुं । सर्वस्यापिजगतोवशेषणेहिसर्वेश्वरत्वादेःपोषणंस्यात् । अन्यथासर्वस्याभावेकस्येश्वरत्वादिकमितिगुणपुष्टिर्नस्यादितिभावः । अदोषं दोषानाधायकं जगत्कस्मान्नशेषयेत् । जगतोन्यसंगराह्नित्यार्थमुक्त्वाजगत्शेषयेदेवेत्यर्थः ॥ १३३ ॥ तत्तस्मात् । स्वसंगवत् प्रतिपाद्यप्रतिपादकभावेनश्रुतिसंबंधवत् । अनेनाज्ञानतोन्यसंगोनेत्यर्थकथनेश्रुतेरपिब्रह्मणासहसंगोनभवेदेव ।

**सर्वेश्वरत्वकर्तृत्वसर्वव्यापित्वपूर्वकान् ॥ गुणान्पोषयितुंकस्मान्नादोषंशेषयेज्जगत् ॥ १३३ ॥ स्वसंगवन्मंगलार्थंसंगमंगीकरोतितत् ॥ अज्ञानदुःखकर्मादिलेपरूपमपाकरोत् ॥ १३४ ॥ अथवादुर्जनैस्संगंस्नेहरूपं निषेधति ॥ प्रमातृत्वप्रमेयत्वसंगंवातैर्न्यवारयत् ॥ अतस्त्वच्छरपातस्यलक्ष्यंवक्षोभवत्तव ॥ १३५ ॥**

अतःब्रह्मज्ञानस्यसर्वार्थसंबंधे नकिंचिद्बाधकमतएतादृशार्थकथनेऽस्मदिष्टसिद्धिरेवेत्यनर्थांतरंचसूचितं । मंगलार्थमित्यनेन परममंगलश्रुतिप्रतिपादितमहदाद्याधारत्वरूपगुणसंगं सर्वस्यवशीसर्वस्येशानइत्यादिश्रुतिप्रतिपादितपरममंगलगुणसंगं श्रीसदोपास्यपादाब्जोनंतश्रीःश्रीनिकेतनइत्यादिस्मृत्युक्तपरममंगलमहालक्ष्मीसंगं अंततस्स्वप्रतिपादितासंगत्वाख्यगुणसंगंचसंगृह्णाति । तर्ह्यसंगश्रुतेःकागतिरित्यतःनिरवद्यत्वश्रुतिसमाख्ययादोषरूपगुणासंगएवेत्याह ॥ अज्ञानेति ॥१३४॥ अर्थांतरंचाह ॥ अथवेति ॥

सत्संगः गुणपूर्वकंप्रीतिःसंगइत्यादौसंगशब्दस्यस्नेहेप्रयोगादितिभावः । तैर्दैत्यैः प्रमातृत्वप्रमेयत्वरूपसंगं प्रमातृप्रमेयभाव लक्षणसंगं ब्रह्मणीतिशेषः । दुर्जनाःब्रह्मणःप्रमातारोनभवंति । ब्रह्मचतेषांप्रमेयंनभवतीत्यसंगश्रुतेरर्थइतिभावः । अतः असंगश्रुतेरज्ञानसंगराहित्यस्य तदप्रमेयत्वस्यार्थतयाप्राप्तेरित्यर्थः । तववक्षएवलक्ष्यंवेध्यमभवदित्यर्थः ॥ १३५ ॥ पूर्वंसार्वज्ञ्ये नाज्ञानाक्षेपमंगीकृत्यपरिहारउक्तः । अधुनाक्षेप्याक्षेपकयोरज्ञानसार्वज्ञरूपयोःपरस्परविरोधेनव्याहतिरित्याह ॥ **किंचेति** ॥

**किंचसार्वज्ञमज्ञानसापेक्षमितियद्वचः ॥ मूकोहमितिवत्तचविरुद्धमितिमेमतिः**
**॥ १३६ ॥ मायांव्युदस्यचिच्छक्त्याकैवल्येस्थितआत्मनि ॥ इतिभागवतोक्त्याय**
**चिदप्यज्ञाननाशिनी ॥ स्वरूपज्ञानमप्यज्ञानस्यवैरिनसंशयः ॥ १३७ ॥ सुखज्ञा**
**नेसतितदातदज्ञानंचकोन्वभूत् ॥ सत्यज्ञानेऽनवच्छिन्नसुखंवाकोन्वभूद्भवेत् ॥ १३८ ॥**

विरुद्धंव्याहतं ॥ १३६ ॥ स्वरूपज्ञानस्याज्ञानस्यचाविरोधात्कथंव्याहतिरित्यतआह ॥ **मायामिति** ॥ यद्यस्मात् । व्युदस्यनि रस्य । चिदपिस्वरूपभूतज्ञानमपि । तत्तस्मात् ॥ १३७ ॥ अनुभवविरुद्धंचस्वरूपज्ञानस्याज्ञानाविरोधित्वमित्याह ॥ ॥ १५९ ॥
**सुखज्ञानइति** ॥ तदासुखज्ञानदशायां तदज्ञानं सुखंनजानामीतिसुखाज्ञानं । सुखज्ञानंहिसाक्षी तच्चस्वरूपज्ञानं त स्यचाज्ञानाविरोधित्वे सुखज्ञानदशायामेवसुखंनजानामीत्यनुभवोपिस्यादितिभावः । अज्ञानेसति भवेसंसारे अनवच्छिन्नसुखं

वाकोन्वभूत् अनुभूतवान् । नकोपीत्यर्थः । सुखज्ञानस्याज्ञानाविरोधित्वेतदप्यनुभूयेतेतिभावः ॥१३८॥ **तत्तस्मात्** । **दूरदूरगे** अत्यंतदूरस्थे परस्परविरुद्धे । अतोनव्याहतेःपरिहारइतिभावः ॥१३९॥ अतएव सार्वज्ञासार्वज्ञयोःपरस्परविरुद्धत्वादेव । कार्यं पर निराकरणाख्यं तत्रधुर्यैर्धुरंधरैराचार्यैरुपाधिखंडने अज्ञताखिलसंवेत्तुर्घटतेनकुतश्चनेत्युक्तमिति ॥ १४० ॥ इदानीमज्ञानंस्वरूप ज्ञानाविरोधिचेत्तर्हिनञर्थस्याभावेन अस्य अकारवाच्यस्यपरमात्मनो विद्येतिव्युत्पत्त्या ब्रह्मण्यविद्यानाम विद्यैवाभूदित्याह ॥

यद्ज्ञातंनतदज्ञातमितियत्तत्वदीपने ॥ स्वयमप्याहसार्वज्ञाज्ञत्वेतद्दूरदूरगे ॥ १३९ ॥
अज्ञताखिलसंवेत्तुर्घटतेनकुतश्चन ॥ इत्युक्तमतएवार्यैःकार्यधुर्यैर्महात्मभिः ॥ १४० ॥
ज्ञानेसत्येवचाज्ञानंयदीदंतर्हिकिंनञा ॥ नाम्निविप्रतिपत्तिस्तेजानतांज्ञानमेवतत् ॥ १४१ ॥
यदितन्मानसंज्ञानंरुणद्धि तवनिष्कले ॥ नब्रह्मणिमनोप्यस्तितस्याज्ञानंतुकेननतत् ॥ १४२ ॥

**ज्ञानेसतीति** ॥ नञाकिं नकिमपि । भावरूपाज्ञानवादिनात्वयाऽज्ञानपदांतर्गतनञः विरोधोह्यर्थोवक्तव्यः । सचब्रह्मज्ञानेनस हनास्तिचेन्नञोवैयर्थ्यमितिभावः । नाम्नि साविद्यैवेत्यस्माभिःकथ्यमानविद्यानाम्नि । जानतामक्षरार्थज्ञानवतां । तद्ब्रह्मण्यभि लप्यमानंतेतवअज्ञानं ज्ञानमेव अस्यब्रह्मणोज्ञानमितिव्युत्पत्तिसूचनायजानतामित्युक्तं ॥ १४१ ॥ तदज्ञानं तर्हिनिष्कले एकाद शेंद्रियपंचभूतात्मकषोडशकलारहितेब्रह्मणिमनोपिनास्तीतियोजना । तस्यब्रह्मणः तदज्ञानं केननिमित्तेनाज्ञानंनकेनापि । ज्ञातृ

मानसवृत्त्याविरोधस्तु ज्ञातृनिष्ठाज्ञानस्यैव नब्रह्मनिष्ठाज्ञानस्य वैयधिकरण्यात् । स्वरूपज्ञानंप्रत्यविरोधित्वात् मानसज्ञानस्य चब्रह्मण्यभावात् नद्वेधापितस्याज्ञानत्वमितिभावः ॥ १४२ ॥ तेमते सर्वमनआदिजगत्त्रयमितिसंबंधः । प्राक्सृष्टेः सृष्टेःप्राक् । तद्ब्रह्मणित्वयांगीक्रियमाणं अज्ञानंन ज्ञानविरोधीतिव्युत्पत्त्या नाज्ञानं तत्तस्मात्परःपरमात्मा अज्ञोपिन भ्रांतोपिन । अज्ञान निमित्तकभ्रांतिमानपिन । अतस्तेनब्रह्मणास्रक्ष्यमाणंजगन्नाज्ञानकल्पितमितिभावः ॥ १४३ ॥ यदिसृज्यजीवस्यस्रक्ष्यमाणजी

अज्ञानकल्प्यंसर्वंतेमनआदिजगत्त्रयं ॥ प्राक्सृष्टेर्नतदज्ञानंनाज्ञोभ्रांतोपिवापरः ॥ १४३ ॥
सृज्यजीवस्यमनसोवृत्त्यानाश्यत्वतोयदि ॥ तदज्ञानेतवमतं युक्तिर्नांगीकरोतितत् ॥ १४४ ॥
अन्यज्ञानेनान्यनिष्ठस्याज्ञानस्यानिवर्तनात् ॥ किंदेवदत्तज्ञानेनयज्ञदत्ताज्ञतागता ॥ १४५ ॥
ऐक्येनतत्समाधानमपिदत्तोत्तरंतव ॥ ऐक्येसति तदज्ञानंतत्सिद्धौचतदेकता ॥ १४६ ॥

वस्य मनोवृत्त्या भाविजीवनिष्ठांतःकरणवृत्त्येत्यर्थः । त दज्ञानत्वाभिमतं । युक्ति स्त दुक्तरीत्याकथ्यमानमज्ञानत्वंयुक्तिर्नांगी करोतीतिसबंधः ॥ १४४ ॥ तामेवयुक्तिंदर्शयति ॥ अन्यज्ञानेनेति ॥ तत्रदृष्टांतमाह ॥ किंदेवदत्तेति ॥ १४५ ॥ ऐक्येन जीवब्रह्मणोरैक्येन । तत्समाधानं अन्यनिष्ठाज्ञानत्वसमाधानं परिहारइतियावत् । तवमते दत्तोत्तरं देवदत्तज्ञानेनयज्ञदत्ताज्ञा नस्यानिवर्तनाख्ययुक्त्यादत्तोत्तरमित्यर्थः । ऐक्यस्योभयथापिसाम्यादितिभावः । दोषांतरंचाह ॥ ऐक्यइति ॥ ऐक्ये जीव

ब्रह्मणोरैक्ये तत्ब्रह्माद्याश्रितं अज्ञानंस्यात् । जीवज्ञानविनाश्यत्वाख्यनिमित्तसंभवात् । तत्सिद्धौ ब्रह्मण्यज्ञानसिद्धौ तदेकता तेनब्रह्मणासहैकता । जीवस्येतिशेषः ॥ १४६ ॥ साएकता । अतःउक्तयुक्तेः तेमते नाश्यतानत्रर्थोनेतियोजना ॥ १४७ ॥ पूर्ववैयधिकरण्याज्जीवनिष्ठमनोवृत्त्याब्रह्मनिष्ठाज्ञाननाशोनेत्युक्तं । इदानीमज्ञानावृतेब्रह्मणिजीवस्यापरोक्षवृत्तिरेवनोत्पत्तुमर्हतीत्याह ॥ कथमिति ॥ अन्यस्यापिजीवस्यापि । अपरोक्षधीः मानसापरोक्षधीः । तत्रहेतुमाह ॥ ज्ञानोत्पत्तीति ॥ विदुरित्यनेनांधकारेज्ञानोत्पत्तिविरोधित्वेनैवावरणत्वदर्शनादितिसूचयति ॥ १४८ ॥ तस्य मानसज्ञानस्य उत्पत्तिंप्रत्यज्ञानस्याविरोधे त

स्वाज्ञानादेवतद्ब्रह्मजीवतामेतिचेद्भिसा ॥ अतोन्योन्याश्रयाचात्रनत्रर्थोनाश्यतानते ॥ १४७ ॥
कथमावरणेसत्येवान्यस्याप्यपरोक्षधीः ॥ ज्ञानोत्पत्तिविरोध्येवयस्मादावरणंविदुः ॥ १४८ ॥
तदुत्पत्त्यविरोधे तन्नाश्यताशापिकिंकृता ॥ बंधस्यैवकुतोनाशस्तर्हिनस्याच्छ्रुतेर्बलात् ॥ १४९ ॥

न्नाश्यताशा तेनज्ञानेनाज्ञानस्यनाश्यत्वाशा किंकृता । अज्ञानस्यनाशात्प्रागेवज्ञानेनसहोक्तविरोधेसतिज्ञाननाश्यतास्यात् । तदभावेतुकथंतन्नाश्यतेत्यर्थः । यदिचज्ञाननाश्यत्वमेवज्ञानेनसहविरोधोनान्यइतिवदेत् तदोत्तरमाह ॥ बंधस्यैवेति ॥ तर्हि पूर्वमविरुद्धस्यैवाज्ञानस्यज्ञानेननाशे बंधस्यैवनाशः साक्षाज्ज्ञानेननाशः कुतोनस्यात्स्यादेव । पूर्वययाकयाचनविधयाविरोधरहितेनज्ञानेननाश्यत्वमात्रस्याज्ञानवद्बंधेपिसुवचत्वात् । नकेवलंसाम्यं अस्मात्पक्षेआधिक्यंचेत्याह ॥ श्रुतेर्बलादिति ॥ दृष्टैवतंमु

च्यतइतिदर्शनादेवबंधनिवृत्तिश्रवणादितिभावः ॥ १४९ ॥ श्रुतस्याप्यस्यनाश्यनाशकभावस्यापहारःपरस्याभिमतः । सच नाश्यनाशकभावातिरिक्तविरोधेसत्येवस्यान्नापरथेत्याह ॥ अज्ञानमिति ॥ तयोर्ज्ञानाज्ञानयोः । ज्ञाननाश्यत्वमे वहितवाप्यज्ञानत्वंनाम । तच्चज्ञानविनाश्येबंधेपिवक्तुंशक्यतइतिनाज्ञानत्वेनापिविशेषः । अतोज्ञानोपत्तिप्रतिबंधकत्वरूप विरोधेनैवप्राग्विरोधोवक्तव्यः । तदभावेश्रौती बंधस्यैवज्ञाननाश्यतायुक्तेतिभावः ॥ १५० ॥ ब्रह्मणिपरेणपरिकल्प्यमा

अज्ञानमेवज्ञानेननाश्यंबंधस्तुनेतिवाक् ॥ तदास्याद्यदिनाशाचप्राक्तयोस्स्याद्विरुद्धता ॥ १५० ॥
मनसोह्यचिदंशस्तेघटप्रायोननाशकः ॥ चिदंशस्यबलान्नाशेकथंब्रह्मचितिस्थितिः ॥ अतो
ब्रह्माश्रिताज्ञानेनत्रःकार्यंनविद्यते ॥ १५१ ॥ अस्यविद्येतिविद्यैवतत्पदेनोच्यतेहरौ ॥ तदधी
नारमाचाभिमन्यमानाऽथवाजडा ॥ ताभिस्स्पृष्टमिदंविश्वंभ्रांत्युत्थंकेनकथ्यतां ॥ १५२ ॥

नाज्ञानस्यप्रागुक्तन्यायेनापिमानसज्ञाननाश्यतांनिराकरोति ॥ मनसइति ॥ मानसज्ञानमज्ञाननाशकमितिवदतापि चिदं शस्यबलादेवनाशोवक्तव्यः । नतुघटप्रायाचिदंशबलात् । तथाचाज्ञाननिर्हरणसमर्थायांब्रह्मचितिमानसवृत्तिनाश्यत्वेनोच्य मानाज्ञानस्यस्थितिरेवकथं नकथंचिदित्यर्थः । प्रतियोगिसत्त्वस्यैवासंभवात्ज्ञाननाश्यत्वेननतस्याज्ञानत्वमितिभावः । उपसंहर ॥ १६१ ॥
ति ॥ अतइति ॥ प्राक्सूचितंभगवतिप्रयुज्यमानाविद्याशब्दार्थस्पष्टमाह ॥ अस्येति ॥ अस्य अकारवाच्यस्य । तत्पदेनावि

द्यापदेन । तदधीनाभगवदधीना रमा विद्यारूपारमा अकारवाच्यस्यपरमात्मनःअधीनाविद्येतिव्युत्पत्त्यातत्पदेनोच्यते तदभि मन्यमानाजडाप्रकृतिश्चतत्पदेनोच्यतइतिपूर्वेणसंबंधः । अभिमन्यमानेतितत्रहेतुसूचनं । अभिमानिवाचकपदस्याभिमन्यमाने प्रयोगादित्यर्थः । जडेत्यनेन विद्यायाअयोग्याअविद्येतिनिमित्तांतरंचसूचितं । ताभिस्तिसृभिरविद्याभिः । अनेनभवोनिरोधः स्थितिरप्यविद्ययेत्यादिवाक्यानामर्थत्रयमुक्तंभवति ॥ १५२ ॥ स्वाज्ञानस्य ब्रह्मणिस्वेनपरिकल्प्यमानाज्ञानस्य मिथ्यात्वंपरोव क्तीतियत् तत्तथैव तदेकंप्रमेयमस्माकमप्यनुकूलमेवेत्यर्थः । कथमित्यतआह ॥ यस्मादिति ॥ तत्अज्ञानं अस्मदीशाने ना

यन्मिथ्यात्वंपरोवक्तिस्वाज्ञानस्यतथैवतत् ॥ यस्मात्तदस्मदीशानेनाभूदस्तिभविष्यति ॥ १५३ ॥
निरनिष्टोहिसोसंगोनिरवद्यःपरःप्रभुः ॥ अनीदृग्जीवता तस्य नाज्ञानेननकर्मणा ॥ १५४ ॥
अज्ञानासंभवादेवनाध्यासोप्यखिलेश्वरे ॥ लेपायोग्येनभोदेशेनपंकोनापितन्मलं ॥ १५५ ॥

रायणे नासीत् नाप्यस्ति नभविष्यतिच । अतस्त्रैकालिकनिषेधप्रतियोगित्वाद्ब्रह्मण्यज्ञानंशशशृंगप्रायमितिभावः ॥ १५३ ॥ अज्ञाननिराकरणन्यायेनैवअद्वैतमपिनिरस्तमित्याह ॥ निरनिष्टइति ॥ अनीदृग्जीवता सानिष्टसावद्यससंगजीवता । तस्यब्र ह्मणः । अज्ञानेन । अज्ञानवशाज्जीवभावोन । निरवद्यत्वश्रुत्याभगवत्यज्ञानाख्यदोषस्यदूरतो निरस्तत्वात् । कर्मणा कर्मवशा दपिन । असंगश्रुत्याकर्मलेपाभावस्यकथनादितिभावः ॥ १५४ ॥ अज्ञानासंभवादेवब्रह्मणिजगदध्यासोपिनेत्येतदनूद्यदृष्टांते

नोपपादयति ॥ अज्ञानासंभवादेवेति ॥ १५५ ॥ भगवत्यज्ञानासंभवायोदीरितश्रुतिस्मृतिविरोधेन जीवाज्ञानसाधकप्रत्य
क्षविरोधेनच परेणब्रह्मण्यज्ञानसाधनायोदीरितानुमानान्यपिबाधितविषयाणीत्याह ॥ तान्यहमिति ॥ त्वत्प्रत्यक्षं जीवस्यतव
प्रत्यक्षं । अनुमायाअज्ञानसाधकानुमायाः आगमः अज्ञानसाधकत्वेनाभिमतआगमःप्रत्यक्षादिविरोधेसत्यागमस्यान्यार्थकथनं
यजमानःप्रस्तरइत्यादौसर्वजनसंप्रतिपन्नमितिभावः ॥ १५६ ॥ १५७ ॥ अतः प्रत्यक्षादिप्रमाणाभावात् तद्बाधितत्वाच्च । तत्र

तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतप ॥ इतिगीतावचनतोयस्सर्वज्ञइतिश्रुतेः ॥ १५६ ॥
अहमज्ञइतिप्रोक्तंत्वत्प्रत्यक्षंनमत्प्रभोः ॥ अनुमायाश्चबाधोभूदागमोन्यार्थमाग
मत् ॥ १५७ ॥ अतोब्रह्माश्रिताज्ञानपक्षोनिर्मूलएवते ॥ अज्ञानंब्रह्मणिनचेत्तत्रे
दंकल्पितंचन ॥ उपादानंतवाज्ञानमुपादेयप्रदेशितत् ॥ १५८ ॥ अज्ञानापगमेतत्त
चैतन्यंतस्यतस्यदृक् ॥ इत्यादिप्रक्रियासर्वाविक्रियाभूत्तवाधुना ॥ १५९ ॥ ॥

ब्रह्मणि । इदंजगत् । तत्रहेतुमाह ॥ उपादानमिति ॥ यद्यस्मात् तवमतेअज्ञानमुपादानं तत्तस्मादुपादेयप्रदेशि उपादेयस्य
कल्पितस्य प्रदेशएवप्रदेशोस्यास्तीतितत्तथोक्तं । उपादानोपादेययोस्समानदेशत्वनियमात् । ब्रह्मणिजगदारोपोपादानरूपाज्ञा
नाभावेतदुपादेयारोपोपिनेतिभावः ॥ १५८ ॥ अज्ञानासंभवेप्रतिकर्मव्यवस्था नेतिप्राक्सामान्येनोक्तंविविच्यदर्शयति ॥ अज्ञा

नापगमइति ॥ तत्तच्चैतन्यं तत्तदधिष्ठानचैतन्यं । तस्यतस्य घटादेर्दृक्अपरोक्षदर्शनं ॥ १५९ ॥ प्रमाणवैकल्यादेव तदग्रह णोपपत्तेरितिवदता ब्रह्मविषयकाज्ञानशक्त्यैवजगन्नजानामीत्यनुभवस्याप्यंगीकारात् अहंकिमपिनजानामीतिवा अहंमामन्यंच नजानामीतिवा अज्ञानज्ञानस्याकारःपरमते प्रातीतिकमज्ञानं नाप्रतीतंतिष्ठतीतिच । आरोपश्च सर्वमहंजानामि मांगौरत्वेनजा नासि अन्यंजीवजडादिकं जीवत्वेनजडत्वादिनाजानामीत्याकारवान् । तथाचत्वदुक्तप्रातीतिकाज्ञानेसतिनायमारोपः विरुद्धा

किंचाहमज्ञइत्येवह्यज्ञानस्याकृतिस्तव ॥ मामहंनविजानामीत्याकारश्चनिगद्यते ॥ १६० ॥
एवंचाज्ञानवद्ब्रह्मनैवविश्वभ्रमोभवेत् ॥ इदंजानामीतिसर्वभ्रांतिर्यस्मात्प्रदृश्यते ॥ १६१ ॥
सर्वंजानामि सर्वंचनजानामीतिचैकदा ॥ विरुद्धाकारसंपत्तिरनानुभविकीचितः ॥ १६२ ॥
अथाज्ञानस्यापगमेभ्रमत्वंयदिकथ्यते ॥ अज्ञानकल्पितत्वोक्तिरयुक्ताभूत्तदातव ॥ १६३ ॥
अज्ञानरूपमेवास्यप्रपंचस्यविचारणे ॥ वक्तव्यनारोपितत्वाख्यमहिमानंततस्स्फुटं ॥ १६४ ॥

कारप्रतीतिद्वयस्यएकादाऽयोगात् । अज्ञानाभावदशायामीदृशप्रतीतौनारोपरूपत्वं । तस्याअज्ञानानुपादानकप्रतीतित्वादितिभा वेनाह ॥ किंचेति ॥ अहमज्ञः अहंनजानामि । अज्ञानस्य अज्ञानज्ञानस्य । मामह मन्यंचेतिशेषः । विश्वभ्रमः विश्वभ्रम रूपं । चितःब्रह्मचैतन्यस्य ॥ १६० ॥ १६१ ॥ १६२ ॥ १६३ ॥ ततस्तस्मात्कारणात् । अज्ञानरूपं नजानामीतिप्रतीयमाना

ज्ञानस्वरूपं ॥ १६४ ॥ इदानींविषयाश्रिताज्ञानपक्षंदूषयति ॥ **विषयाश्रितमिति** ॥ विषयाश्रितं इदंरजतमितिविपर्ययेरजत तयाप्रतीयमानायाशुक्तिःतदावरकमज्ञानं । शुक्त्यवच्छिन्नचैतन्याश्रितंतदावरकमज्ञानमेव शुक्त्यावरकमज्ञानंवदंति । तेनचशुक्ते र्ज्ञानाभावात् तत्रविपरीतज्ञानमितिपरप्रक्रिया । विषयेशुक्त्यादौ एकस्यवृत्त्या इयंशुक्तिरित्यपरोक्षज्ञानेन तन्नाशे शुक्त्यावरका ज्ञाननाशे । तत्शुक्तिशकलं ॥ १६५ ॥ तत्रदृष्टांतमाह ॥ **विषयावरकमिति** ॥ विषयावरकंतमिस्रमितिसंबंधः ॥ १६६ ॥

**विषयाश्रितमज्ञानंयद्यावरणमिष्यते ॥ तर्ह्येकवृत्त्यातन्नाशेसर्वैर्दृश्येतवस्तुतत् ॥ १६५ ॥**
**विषयावरकंदीपस्तमिस्रंनाशयेद्यदा ॥ तदातद्वस्तुसर्वैश्चसुव्यक्तंकिंनदृश्यते ॥ १६६ ॥**
**यद्यज्ञानांतरंतन्नपुनरावरणंभवेत् ॥ तर्हिकेनापितद्वस्तुनदृश्येताऽऽवृतत्वतः ॥ १६७ ॥**
**यदिज्ञातृविभेदेनकल्प्येतावरणंघटे ॥ तदाह्यदृष्टस्यबहोःकल्प्यत्वाद्गौरवंभवेत् ॥ १६८ ॥**
**नहितत्तद्गृहालोकैर्नाश्यतामिस्रराशयः ॥ घटादिषुप्रदृश्यंतेततोप्रामाणिकंत्विदं ॥ १६९ ॥**

तत्रशुक्तिशकले अज्ञानांतरं निवृत्ताज्ञानादज्ञानांतरं । केनापि प्राचीनेन ततोन्येनचकेनापि ॥१६७॥ ज्ञातृविभेदेन एकस्यज्ञा तुः एकमावरणं । अन्यस्यचान्यत् । एकस्यावरणनिवृत्तौसएवतत्पश्यति । अन्यस्तुस्वावरणसद्भावान्नपश्यतीत्येवंप्रतिपुरुषवैचित्र्ये णैवेत्यर्थः । घटइत्युपलक्षणं । शुक्तावित्यपिद्रष्टव्यं । अदृष्टस्य घटावरकांधकारादावदृष्टस्य ॥ १६८ ॥ तदेवदर्शयति ॥ **नहीति** ॥

ततस्तस्मादिदंपुरुषवैचित्र्येणावरणमप्रामाणिकमितिसंबंधः । प्रामाणिकत्वाद्गौरवंनदोषइतिपराशाखंडनायेदमुक्तं ॥ १६९ ॥ अतः विषयाश्रिताज्ञानस्याप्रामाणिकत्वात् । इदं प्रमाप्रतिबंधकं तमः अज्ञानं पुंगतमेव ज्ञातृपुरुषनिष्ठमेव । अनेनपुंग तमेवहितमइत्याचार्यवचनंसंगृह्णाति । तमसःपुंनिष्ठत्वेयुक्तिमाह ॥ **मर्त्याहीति** ॥ हियस्मात् मर्त्याएवतामसाइत्युच्यंते नतु घटोवापटोवातामसइतिकेनाप्युच्यते । अतःपुंगतत्वमेवतमसोयुक्तमितिभावः ॥ १७० ॥ तमसःपुंनिष्ठत्वेचकाचादिवत्प्रतिपुरुष वैचित्र्यंचकल्पनांविनैवसिद्ध्यतीत्याह ॥ **पुंस्विति** ॥ नानात्वं प्रतिपुरुषवैचित्र्यं । एषांतमसां । एवंचमत्पक्षेनकिंचित्कल्प्यमिति

**अतःपुंगतमेवेदं तमो मर्त्याहितामसाः ॥ १७० ॥ पुंसुकाचादिदोषाश्चयतस्संतिपृथक्पृथक् ॥**
**अतोनानात्वमप्येषामनायासेनसिद्ध्यति ॥ १७१ ॥ नाश्यनाशकयोर्ज्ञानाज्ञानयोरेकदेशता ॥**
**तमःप्रकाशवत्सिद्धानांधकारोपिचेतने ॥ दीपोवाचेतनगतस्ततस्तौयत्रकुत्रचित् ॥ १७२ ॥**

भावः ॥ १७१ ॥ अज्ञानस्यपुंनिष्ठत्वेयुक्तिमप्याह ॥ **नाश्यनाशकयोरिति** ॥ एकदेशता नाशकज्ञानवतिपुरुषे नाश्याज्ञान स्यापिविद्यमानतेत्यर्थः । नाशकोदीपोयस्मिन्देशे तत्रैवविद्यमानस्यतमसोनाशदर्शनात्तमःप्रकाशवत्सिद्धेत्युक्तं । नाश्यनाशक योरंधकारदीपयोः विषयघटाद्याश्रयत्वदर्शनाज्ज्ञानाज्ञानयोरपिविषयाश्रितत्वमस्त्वित्याशंकांदृष्टांतदार्ष्टांतिकयोर्वैषम्यंदर्शयन्परि हरति ॥ **नांधकारइति** ॥ दीपोवाचेतनगतोनेतिपूर्वेणसंबंधः । ततः नाशकदीपस्यचेतनगतत्वाभावेन नाश्यतमसोपिपुंनिष्ठ

त्वस्यावश्यंभावाभावात् तौ अंधकारदीपौ यत्रकुत्रचित् तमस्स्थितघटपटादिदर्शनेद्वयोरपितद्देशता । अंधकारस्थितपुरुषादिदर्शनेतुद्वयोरपिपुरुषदेशीयत्वमित्यर्थः ॥ १७२ ॥ ज्ञानंतुज्ञातृपुंस्येव नतुविषयेघटादौ । तस्यजडत्वेनज्ञानाधारताऽयोग्यत्वात् । तुशब्दः दीपाज्ज्ञानस्यउक्तविशेषद्योतकः । अतः नाशकज्ञानस्यज्ञातृपुरुषनिष्ठत्वनियमात् । नाश्याज्ञानं ज्ञाननाश्याज्ञानंज्ञातृपुरुषएववक्तव्यमितिसंबंधः । उक्तरीत्यानाश्यनाशकयोस्समानदेशत्वावश्यंभावेन नाशकज्ञानस्यपुंनिष्ठत्वनियमे नाश्याज्ञानस्यापितन्निष्ठत्वावश्यंभावात् ब्रह्मणिकथंस्यात् । ब्रह्माश्रिताज्ञानपक्षोगतइतिभावः ॥ १७३ ॥ अज्ञानस्यपुंनिष्ठत्वेपिबाह्यविषयावरण

ज्ञानंतुज्ञातृपुंस्येवतन्नाश्याज्ञानमप्यतः ॥ वक्तव्यंज्ञातृपुरुषेब्रह्मणिस्यात्कथंवद
॥ १७३ ॥ ज्ञानाज्ञानेहिपुंधर्मौपुंस्थावेवार्थसाधकौ ॥ किंनपुंनेत्रगःकाचोबाह्या
र्थावरणक्षमः ॥ अतस्तवानुमानंचपरकैंकर्यमाचरेत् ॥ १७४ ॥ ॥

त्वंदृष्टांतमुखेनघटयति ॥ ज्ञानाज्ञानेइति ॥ अर्थसाधकौ विषयप्रकाशनविषयावरणाख्यफलसाधकौ । ज्ञानाख्यप्रकाशइवतत्प्रतियोगितमोपीदमंतस्स्थमेवबहिःकार्यकारीतिसूचनायज्ञानस्यापिग्रहणं । बाह्यार्थस्यशुक्त्यादेः । अतः ज्ञानाज्ञानयोःपुंनिष्ठत्वनियमात् । तवानुमानं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वदेशगतस्वनिवर्त्यवस्त्वंतरपूर्वकं । अप्रकाशितार्थप्रकाशकत्वात् । अंधकारेप्रथमोत्पन्नप्रदीपप्रभावदित्यनुमानं । परकैंकर्यं परस्य जीवनिष्ठाज्ञानवादिनःकैंकर्यं स्वदेशगतेत्युक्त्याऽज्ञा

नस्यज्ञानाधारजीवाश्रितत्वस्यैवसिद्ध्या त्वदभिलषितब्रह्माश्रितत्वासिद्धेरनुमानस्यतत्ववादिनंप्रतिसिद्धसाधनत्वादितिभावः । परमतेप्यधिष्ठानचैतन्याख्यज्ञानस्यकथंचिदज्ञानसमानदेशत्वसंभवेपिप्रमाणज्ञानस्यांतःकरणवृत्तिरूपस्यजीवनिष्ठत्वावश्यंभावे नार्थांतरत्वादितिभावः ॥ १७४ ॥ तदेवोपपादयति ॥ स्वदेशगतमिति ॥ प्रमाणज्ञानतः प्रमाणज्ञानंपक्षीकृत्य । स्वदेशगतं प्रमाणज्ञानसमानदेशगतमित्यर्थः । प्रमातृपुरुषेजीवे । प्रमातृपदेनप्रमावान्प्रमातेतिप्रमाणज्ञानस्यजीवनिष्ठत्वंस्फोरयति । तद

स्वदेशगतमज्ञानंप्रमाणज्ञानतस्तव ॥ सिद्ध्यत्प्रमातृपुरुषेयतस्सिद्धमभूद्बलात् ॥
प्रमाताजीवएवेतिजीवाज्ञानमभूद्धितत् ॥ १७५ ॥ चक्षुषासन्निकृष्टार्थज्ञानंस्या
दंतरेवहि ॥ जानामीत्यांतरत्वस्यसुखादाविवसिद्धितः ॥ १७६ ॥ परोक्षज्ञानक
रणाज्ज्ञानमंतर्भवेद्यथा ॥ तथाऽपरोक्षकरणाज्ज्ञानमप्यंतरेवहि ॥ १७७ ॥

ज्ञानं ॥१७५॥ मनोवृत्तेरपिचक्षुर्द्वाराविषयपर्यंतधावनात्समानाश्रयत्वाशांनिराकरोति ॥ चक्षुषेति ॥ आत्मामनसासंयुज्यतेमन इंद्रियेणइंद्रियमर्थेनेतिप्रसिद्धिंहिशब्देनसूचयति । तथाचमनसोबहिर्गमनमप्रामाणिकमितिभावः । ज्ञानस्यांतरत्वमनुभवारूढंकरोति ॥ जानामीति ॥ अहंसुखीतिवत् अहंजानामीतिज्ञानस्यांतरत्वस्यसर्वानुभवसिद्धत्वादितिभावः ॥१७६॥ बाह्यकरणादंतर्ज्ञानोदयेंऽतरंगदृष्टांतमप्याह ॥ परोक्षेति ॥ तथाअपरोक्षकरणादितिपदच्छेदः । ज्ञानमपरोक्षज्ञानं । परोक्षज्ञानइवबाह्यकरणादंत

रेवापरोक्षज्ञानस्याप्युदयसंभवेतद्वदेवतदाकारत्वाभावेपितज्ज्ञानत्वस्यापिसंभवेमनोवृत्तेर्बहिर्गमनकल्पनंव्यर्थमितिभावः ॥१७७॥ परोक्षज्ञानेपिमनोवृत्तेर्विषयपर्यंतधावनमस्त्वितिमंदाशंकांपरिहरति ॥ यदीति ॥ तर्हीतिशेषः । चक्षुर्वत्शब्दस्यपुनरावृत्तिशून्य त्वादित्यर्थः । दीर्घनिद्रामरणं । तथाचग्रहणस्मरणादेरभावान्मृतप्रायोसीतिभावः ॥ १७८ ॥ तदुपपादयति ॥ मनोयात्रेति ॥ मनसोबहिर्यात्रेत्यर्थः । जीवस्यदेहाद्बहिर्यात्राकाले । हियस्मात्अंतःकार्यकरं । एतस्मात्तन्मनःअंतःकरणमितियोजना । बहि

यदिशब्दसहायेनमनोवैकुंठमाविशेत् ॥ पुनर्निवृत्तिशून्यंस्यादीर्घनिद्राभवेत्तदा ॥ १७८ ॥ मनोयात्रा
तुजीवस्ययात्राकालेपरंभवेत् ॥ अंतःकरणमेतस्मादंतःकार्यकरंहितत् ॥ १७९ ॥ अतोज्ञानवदज्ञानमां
तरंसाक्षिणोबलात् ॥ एकदेशत्वमनयोर्नाश्यनाशकयोर्ध्रुवं ॥ १८० ॥ नचेदन्याश्रितज्ञानमन्याज्ञानं
निवर्तयेत् ॥ अज्ञानमप्यांतरंतन्नबाह्यविषयाश्रितं ॥ १८१ ॥ अहमज्ञइतिह्यक्षंजीवाज्ञानस्यसाधकं ॥
अनादिमाययासुप्तोयदाजीवःप्रबुध्यते ॥ इतिवेदेनमायेयंजीवगैवेतिगीयते ॥ १८२ ॥ ॥

र्गत्वाकार्यकारिचक्षुरादिवद्बाह्यकरणमेवस्यात् नत्वंतःकरणमितिभावः ॥ १७९ ॥ अतः ज्ञानस्यांतरत्वात् । साक्षिणः अहं जानामीतिवदहंनजानामीत्यस्यापिजीवनिष्ठत्वग्राहिणः । प्रागुक्तमेवहेतुद्वयंसंगृह्यस्मारयति ॥ एकदेशत्वमिति ॥ अनयोर्ज्ञा नाज्ञानयोः ॥ १८० ॥ अन्याश्रितज्ञानंचैत्राश्रितज्ञानं । अन्याज्ञानंमैत्राश्रिताज्ञानं । साक्षिणोबलादित्येतद्विशदयन्नुपसंहरति ॥ अज्ञानमिति ॥ तत्तस्मात् ॥ १८१ ॥ अहंसाक्षी । प्राग्ब्रह्माश्रिताज्ञानपक्षेबाधकतयोदाहृतांश्रुतिंजीवाज्ञानपक्षेसाधकत्वे



नाप्युदाहरति ॥ अनादीति ॥ १८२ ॥ जीवब्रह्मणोरैक्येनसमाधास्यामीत्याशांनिराकर्तुंप्रागुक्तदूषणगणंबुद्धावारोहायस्मार यति ॥ ऐक्येनेति ॥ अन्यथीकरणं जीवविषयाणांब्रह्मविषयत्वकरणं । हीत्यनेनपरमतेकर्तृकर्मभावविरोधांगीकारात्प्रमेयेब्रह्म णिप्रमातृत्वं नजीवैक्येनापिनेतुंशक्यतइतिसूचयति ॥१८३॥ अज्ञानस्यजीवाश्रितत्वेप्रत्यक्षंश्रुतिंचोक्त्वाऽनुमानमप्याह ॥ अज्ञा नमिति ॥ विवादपदमज्ञानं ज्ञातृपुंनिष्ठं ज्ञानसमानाश्रयत्वात् । सुखवद्दुःखवद्वेतिप्रयोगोद्रष्टव्यः ॥ १८४ ॥ जगदुपादानत

ऐक्येनचप्रमाणानामन्यथीकरणंवृथा ॥ ऐक्यासिद्धेरयुक्तंच प्रमाताजीवएवहि ॥
नचेत्सवैक्यतस्सर्वमस्तव्यस्तंभवेत्तव ॥ १८३ ॥ अज्ञानंज्ञातृपुंनिष्ठंज्ञानेनैकाश्रय
त्वतः ॥ सुखवद्दुःखवच्चैतिह्यनुमाप्यस्त्यबाधिता ॥ १८४ ॥ मृदादिकमुपादानंकार्ये
कार्येचविद्यते ॥ अतोजगत्सर्जनार्थमपिनाज्ञानमिष्यते ॥ १८५ ॥ मायी मायाधी
श्वरत्वाद्धीमान्गोपालकोयथा ॥ तस्माद्ब्रह्माश्रिताज्ञानमज्ञानादेववर्णितं ॥ १८६ ॥

याब्रह्मण्यज्ञानसिद्धिरितिमतमपाकरोति ॥ मृदादिकमिति ॥ आदिपदेन मूलप्रकृतेर्ग्रहणं । अतः आदिसृष्टौमूलप्रकृतेरवांतर सृष्टौचमृदादेरुपादानस्यविद्यमानत्वात् ॥ १८५ ॥ प्राक्मायिनंतुमहेश्वरमितिश्रौतमायापदस्यप्रकृतिपरतोक्ता । इदानींमाया परत्वेपिनास्माकमनिष्टमितिदृष्टांतमुखेनाह ॥ मायीति ॥ उपसंहरति ॥ तस्मादिति ॥ अज्ञानात्पूर्वोक्तरापरिज्ञानात्॥१८६॥

मायायाःजीवस्वरूपभूतानंदाद्यनुभवप्रतिबंधकत्वघटनायजीवाश्रितत्वमेवयुक्तमित्याह ॥ जीवइति ॥ तस्मा ज्जीवानंदाननुभ
वस्यान्यथानुपपत्तेः । सामाया । अनेनाज्ञानस्यजीवाश्रितत्वेऽर्थापत्तिरप्युक्तेतिज्ञातव्यं ॥ १८७ ॥ अज्ञानस्यजीवरूपाच्छादक
त्वेऽहमितितदुल्लेखःकथमित्यतआह ॥ जीवेति ॥ तद्रूपज्ञाने तत्स्वरूपज्ञाने प्रतिबंधिकानैवेतिसंबंधः । तत्रदृष्टांतमाह ॥ इम
मिति ॥ यथामंत्रशक्त्याप्रतिबद्धोऽनलःमंत्रितमेकंपुरुषंविहायान्यंदहति । एवमज्ञानमप्यानंदानुभवप्रतिबंधकमप्यहमितिस्वरूप

जीवस्तुमायासुसत्वान्नस्वानंदादिवीक्षते ॥ मायाऽभावेसतीक्षेततस्माज्जीवाश्रितैवसा ॥ १८७ ॥
जीवस्वरूपानंदादीनाच्छादयतिकेवलं ॥ अहमित्येवतद्रूपज्ञाने नप्रातिबंधिका ॥ इमंतुनदहेत्युक्तं
मंत्रशक्त्यायथाऽनलः ॥ १८८ ॥ सासत्याप्रकृतेरंशभूताजीवेषुतिष्ठति ॥ १८९ ॥ नारायणप्र
सादेनकाचिदक्षिमलोपमा ॥ नश्येद्वस्त्रावृतिप्रायाकाचिच्चापसरेत्ततः ॥ १९० ॥ ॥

मात्रानुभवे न प्रतिबंधकमितिभावः ॥१८८॥ साजीवाच्छादिका प्रकृतेरंशभूतामाया सत्या शिलाकणादावारोपितमण्यादेर्दाहप्रति
बंधकत्वादर्शनेनप्रतिबंधकत्वादेवाबाध्या । प्रकृत्यंशत्वमपिसत्यत्वेहेतुः।सर्वप्रलयेप्युर्वरिताहिप्रकृतिरित्युच्यते । तस्यास्तुकथंमिथ्या
त्वमितिभावः ॥१८९॥ जीवाच्छादिकापरमाच्छादिकेतिद्विविधामाया । तत्रैकानश्येत् । अपराचापसरेदित्येतद्दृष्टांतमुखेनघटय
ति ॥ नारायणेति ॥ काचिज्जीवाच्छादिका अक्षिमलोपमा । यथाहिमलंकाचादिकंनश्यत्येव । तथेयमपिनश्येदितियोजना । ॥ १६६ ॥

काचित्परमाच्छादिका । वस्त्रावृत्तिप्राया मुखबद्धवस्त्ररूपनयनावृतिप्रायेत्यर्थः । ततःजीवनयनात् । अपसरेदेव । नतुनश्येत् । यथानयनावरणभूतयोःकाचवस्त्रयोरेकस्यनाशोपरस्यापसरणंचलोकेदृष्टंतथेतिभावः ॥ १९० ॥ द्वयं जीवाच्छादकपरमाच्छादक भेदेनद्विविधं । जीवो पिहितनयनःस्वदेहपरदेहाविव स्वस्वरूपंचनजानाति । अतस्तत्प्रतिबंधकमज्ञानद्वयमपितद्गमेवभवेदितिभावः ॥ १९१ ॥ उभयोःउक्तद्विविधाज्ञानयोः । भगवतोऽज्ञानातिदूरस्थत्वेयुक्तिमाह ॥ नचेदिति ॥ नचे द्विविधमायादूरस्थोन

जीवस्याच्छादिकात्वेकापरस्याच्छादिकापरा ॥ द्वयंजीवगतंनित्यंहरिस्तूभयमोचकः ॥ १९१ ॥
उभयोश्चातिदूरस्थोनचेत्तमोचयेत्कथं ॥ निगडेननिबद्धांघ्रिर्नहिराजाविमोचकः ॥ १९२ ॥
अस्मिन्नर्थेश्रुतिर्मानंपुराणानिचभूरिशः ॥ अनिर्वाच्यातुयामायासाऽनिर्वाच्यैवधीमतां ॥ १९३ ॥
योमायांवत्त्यधीशानेसप्रष्टव्यस्तयेशितुः ॥ भ्रमस्संपाद्यतेनेतिनचेद्विद्यैवतामपि ॥ १९४ ॥

चेत् तेद्विविधमाये । निगडबद्धपुरुषमोचकस्यराजादेःकार्वादेर्वातदबद्धत्वस्यावश्यंभावादितिभावः । तदेवदर्शयति ॥ निगडेनेति ॥१९२॥ श्रुतिरनादिमाययेत्यादिका । पुराणानि उक्तानिवक्ष्यमाणानिच । अनिर्वाच्या वक्तुमप्ययोग्या ॥१९३॥ ब्रह्मण्यविद्यां निरस्यमायामपिनिराकर्तुंपृच्छति ॥ योमायामिति ॥ तयामाययाभ्रमः संपाद्यतेनवेतिप्रष्टव्यइतिपूर्वेणान्वयः । नेतिपक्षंदूषयति ॥ नचेदिति ॥ नचेद्भ्रमसंपादिकानभवतिचेत् । ऐंद्रजालिकमायेवेश्वरनिष्ठापिमायावीश्वरस्यनभ्रांतिकरी किंतुद्रष्टॄणामन्येषामेव

युक्ति- भ्रांतिकरीत्यर्थः । विद्यैव सामायाभगवतोविद्यैव परव्यामोहकमंत्रौषधादिविद्यावद्विद्यैव । नत्वज्ञानवन्महादोषइतिभावः । त मल्लिका

॥ ३२ ॥ हिंतामंगीकृत्यजगतोमायाकल्पितत्वंकुतोनांगीक्रियतइत्यतआह ॥ तामपीति ॥ सदानिरस्तकुहकंसत्यंपरंधीमहीतिभगवतोनि शुद्धिसौ०

रस्तकुहकत्वोक्त्या परंकेवलं तामपि कुहकविद्यारूपमायांनोरीचक्रुरितिसंबंधः । अज्ञानभ्रमाख्यमहादोषानाधायकत्वेप्यवद्यगंधविधुरेहरौकुहकत्वरूपस्वल्पदोषोपिनवक्तुमुचितइतिनांगीचक्रुरितिभावः । आद्ये भ्रमसंपादकत्वपक्षे मायेतिशब्दभेदमात्रंसाप्यविद्यैव । तस्मादयंकल्पःपक्षश्च विकल्पात् अज्ञानपक्षोक्तविकल्पाद्भीर्यस्यसःविकल्पभीः ॥ १९४ ॥ १९५ ॥ लोकनीत्यापि

निरस्तकुहकत्वोक्त्यानोरीचक्रुःपरंहरौ ॥ आद्येत्वविद्यैवतस्मात्कल्पोयंचविकल्पभीः ॥१९५॥
स्वदोषाच्छादनायाल्पोनिर्दोषेष्वपितंवदेत् ॥ जीवेसंभवदज्ञानंब्रह्मण्यपिनकिंजगुः ॥ १९६ ॥
किंमलैस्समलस्यास्यनिर्मलस्यमलंमलं ॥ नीलिमादूषणंभानोस्स्वर्भानोस्तुसभूषणं ॥ १९७ ॥

भगवत्यज्ञानकथनंपरिहसति ॥ स्वदोषेति ॥ अल्पःमूर्खः स्वदोषाच्छादनाय स्वस्मिन्नागतजारत्वादिदोषाच्छादनाय । तंदोषं जीवेस्वस्मिन्मायावादिनःब्रह्मण्यपिनजगुःकिमितिसंबंधः । स्वस्याज्ञानित्वेनागतनैच्यपरिहारायब्रह्मण्यज्ञानंजगुः । नतुप्रमाणबलादितिभावः ॥ १९६ ॥ ननुपरोदीरितरीत्याब्रह्मण्यज्ञानमस्तु भवतांकिंगतमित्यतस्तदपिलोकनीतिविरुद्धमि ॥ १६७॥

त्याह ॥ किंमलैरिति ॥ समलस्य कर्मलेपदुःखादिमलसहितस्यजीवस्य मलैरज्ञानभ्रमादिमलैः किं संसाराख्यमलमलिनस्यजीवस्यसर्वमपिमलंसंभावितमितिभावः । निर्मलस्य निरवद्यत्वश्रुत्यादोषगंधविधुरस्यभगवतः मलं अज्ञानकुहकत्वरूपमलमपिमलमेव । तत्रदृष्टांतमाह ॥नीलिमेति ॥ भानोस्सूर्यस्य । स्वर्भानोःराहोः । सःनीलिमा॥१९७॥भगवज्ज्ञानमज्ञानाविरोधीत्येतदपिनीतिविरुद्धमित्याह ॥ स्वयमिति ॥ अशक्तः समुद्रतरणादावशक्तःखलोमर्कटः शक्तस्यहनूमतोप्यशक्तिंप्रथयेत् । कश्शक्तोजलधिंविलंघितुमहोमिथ्येतिरामायणमितिमर्कटवचनात् । एवंमायावाद्यपीत्याह ॥ स्वज्ञानवदिति ॥ स्वस्यजीवस्यज्ञानवत् जीवस्यज्ञानं नित्यतयाविद्यमानमपिहरेरिच्छयायथाऽज्ञानानुगंतद्वदित्यर्थः । हरेःपरनिष्ठाज्ञाननिर्हरणेसमर्थस्य ज्ञानं

स्वयंह्यशक्तश्शक्तस्याप्यशक्तिंप्रथयेत्खलः ॥ स्वज्ञानवद्धरेर्ज्ञानंकिंनाज्ञानानुगंजगौ ॥ १९८ ॥
अनृतंवदतोवाक्यमसंबद्धंभवेद्ध्रुवं ॥ ज्ञानस्यसहकार्यस्यहानिर्नावरणेकिल ॥ १९९ ॥

सर्वविषयकज्ञानं अज्ञानानुगं अज्ञानानुकूलं अज्ञानसहितमितियावत् । नजगौकिं । यथास्वस्याशक्तौपरस्याप्यशक्तिकथनंदुर्नीतिरूपत्वान्नीतिविरुद्धं तथेदमपीतिभावः ॥ १९८ ॥ मायिमतांतरमपिनीतिविरुद्धमित्याह ॥ अनृतमिति ॥ अनृतंवदतश्चोरस्य । असंबद्धं पूर्वोत्तरासंबद्धं । यामिकैर्विचार्यमाणश्चोरःपूर्वमेकंवदेत् पुनस्तद्विरुद्धमन्यदपिवदेत् । तदाऽयंचोरइतिनिश्चिनुयुस्तथेतिभावः । सहकार्यस्यअर्थप्रकाशनाख्यकार्यसहितस्य ज्ञानस्य स्वरूपभूतनित्यज्ञानस्य आवरणे अविद्याख्यावरणे सत्यपिहानिर्नकिल । ज्ञानप्रतिबंधकंह्यावरणं । तस्मिन्सत्यपिज्ञानस्यान्यूनतेतियन्मायिमतं तदपिदुर्नीतिरूपत्वान्नीतिविरुद्धमि

तिभावः ॥ १९९ ॥ मतांतरमपिनीतिविरुद्धमित्याह ॥ सकृदिति ॥ सकृद्भ्रष्टः अनाचारादिनापतितः पश्चाद्भ्रष्टतायाः अना चारांतरेणपातित्यात्बिभेतिकिं । भिक्षोमांसनिषेवणंकिमुचितंकिंतेनमद्यंविनेतिभ्रष्टवचनान्नबिभेत्येव । यतएवहिसर्वज्ञेपरमात्म नियदज्ञानंकथितं तदेवप्रथमाबद्धं । सर्वज्ञेअज्ञानायोगात् । पुनस्तस्याज्ञानस्ययद्दौर्घस्यंदुर्घटत्वं तद्भूषणंनाभाषतकिं अभाषतैव । इदंचद्वितीयमबद्धं । अतःइदमपिमतंप्रागुक्तदुर्नीतेरुदाहरणमितिभावः ॥ २०० ॥ अधुना ईश्वरस्यज्ञाने कर्तृकर्मभावविरोधा त्स्वाविषयत्वमितियद्दूषणमुक्तं स्वस्वरूपानभिज्ञत्वस्यलोकेदोषतयापरिपठितत्वात् तत्परिहर्तुमाह ॥ मामहमिति ॥ मामहंन

सकृद्भ्रष्टःखलःपश्चाद्भ्रष्टतायाबिभेतिकिं ॥ सर्वज्ञाज्ञानदौर्घस्यंकिंनाभाषतभूषणं ॥२००॥ मामहंनविजानामिमांजानाम्यहमित्यपि ॥ सर्वस्यानुभवात्स्वस्यविषयोपिस्वयंभवेत् ॥ २०१ ॥
परस्मिन्समवेतायाक्रियातत्फलशालियत् ॥ तत्कर्मेतिहिभाट्टोक्तलक्षणानुपपत्तितः ॥२०२॥

जानामीत्यज्ञानज्ञाने स्वस्यैव कर्मत्वस्य अज्ञानज्ञातृतयाकर्तृत्वस्यच सर्वस्यानुभवात् मामहंजानामीत्यनुभवस्यापलापंकरिष्य तीत्यतःप्रथमोदाहरणं । स्वस्याप्यभिमतत्वात् ॥ २०१ ॥ किंचस्वस्यैवस्वविषयत्वं परसमवेतक्रियाफलशालित्वंकर्मत्वमितिभा ट्टोक्तलक्षणानुपपत्त्यानांगीकरोषि उतकर्तृकर्मभावविरोधादितिविकल्पंमनसिनिधायाद्यंदूषयति ॥ परस्मिन्निति ॥ तस्याः क्रि यायाःयत्फलंतच्छालित त्परसमवेतक्रियाफलशालि । दृष्टार्थस्य उक्तानुभवद्वयबलात्सर्वानुभवसिद्धार्थस्य । लक्षणांतरं कर्तुरी

प्सिततममित्यादिलक्षणांतरं । लक्षणानुपपत्त्याद्दृष्टार्थपरित्यागोनेत्यत्रदृष्टातमाह ॥ किंन्विति ॥ किंपुरुषः तुरंगवक्राकारवक्र वानन्यत्रमनुष्याकारवान् । किंनरः मनुष्यमुखसदृशमुखवानन्यत्रपक्ष्याकारः । विलक्षणः दृष्टमनुष्यविरुद्धलक्षणः स्वानु भूतपक्षितुरंगलक्षणरहितोपि । किंपुरुषादिः यथादृष्टत्वादंगीकार्यः तथाभाट्टोक्तकर्मलक्षणरहितमपिस्वकर्मकत्वमंगीकर्तव्य मितिभावः ॥ २०२ ॥ २०३ ॥ कर्मलक्षणानंगीकारेणकर्मत्वस्यानिरुक्त्या ज्ञानस्यज्ञेयेनसहविषयविषयिभावानुपपत्त्येतिया वत् । दृश्यस्यघटादेः अध्यासःआरोपः दृशि अधिष्ठानचैतन्ये । तत् विषयत्वं । दृग्दृश्ययोस्संबंधानुपपत्त्याहिब्रह्मणि

दृष्टार्थस्यकथंत्यागोवक्तव्यंलक्षणांतरं ॥ किंनुकिंपुरुषोनास्तिकिंनरोवाविलक्षणः ॥ २०३ ॥
कर्मत्वस्यानिरुक्त्याहिदृश्याध्यासोदृशीरितः ॥ परोक्तलक्षणेभक्त्यातत्कुतोद्यनिरुच्यते
॥ २०४ ॥ अंत्यश्चरणसंयोगोग्रामेणसहयोभवेत् ॥ नतत्फलमनुद्देशात्क्रियायाबहुदूरतः
॥२०५॥ ग्रामंपदास्प्रष्टुमेवनहिकोपिव्रजेत्पुमान् ॥ ग्रामस्थधनपूर्वार्थप्राप्तिरेवप्रयोजनं ॥ २०६ ॥

जगदारोपोंगीकृतः । अधुनापरोदीरितविषयलक्षणेअभिमानंकुर्वतःकथंनपूर्वोत्तरविरोधइतिभावः ॥ २०४ ॥ अधुनापरोक्तक र्मलक्षणंदूषयति ॥ अंत्यइति ॥ क्रियाफलंकिल ग्रामेणसहअंतिमश्चरणसंयोगः । सःकर्तरिपुरुषेप्यस्तीतितत्रातिव्याप्तिपरिहा रायहिपरसमवेतेत्युक्तं । तत्रयःग्रामेणसहांत्यश्चरणसंयोगः तत्फलमेवन । तत्रहेतुःबहुदूरतः क्रियायाः गमनक्रियायाः अनुद्दे शात् अनुद्देश्यत्वादितियावत् ॥ २०५ ॥ तदेवविशदयति ॥ ग्राममिति ॥ पदाग्रामंस्प्रष्टुमेवकोपिपुमान्नहिव्रजेत् । बह्वा

याससाध्यगमनक्रियायाःग्रामचरणसंयोगएवनकस्याप्युद्देश्यइतिभावः । किंतर्हिप्रयोजनमित्यतआह ॥ ग्रामस्थेति ॥ अतः क्रियाफलशालित्वंकर्तुरेव नकर्मणइतिकथमिदंकर्मलक्षणंस्यात् । दूरेतस्यातिव्याप्तिपरिहारायविशेषणदानं ॥ २०६ ॥ ननुमास्तूद्देश्यत्वं क्रियाजन्यत्वेनैवचरणसंयोगस्यफलत्वमस्त्वित्यतआह ॥ नचेदिति ॥ नचे द्धनादिप्राप्तिरेवोद्देश्यतयाफलंनचेत् क्रिययागमनक्रियया पूर्वःप्रदेशः विभागवा न्क्रियाजन्यविभागवानितियावत् । स्यात् । उत्तरप्रदेशोपिसंयोगशालीस्यात् क्रियाजन्यसंयोगवानितियावत् । क्रिया क्रियातःपूर्वदेशविभागः उत्तरदेशसंयोगश्चेतिसर्वैरनुभूयमानत्वात् ॥२०७॥ अस्त्वेवं प्रकृ

नचेत्पदेपदेपुंसःक्रिययास्याद्विभागवान् ॥ पूर्वःप्रदेशस्संयोगशालीस्यादुत्तरोपिच ॥ २०७ ॥
त्वदुक्तलक्षणेनस्याद्विषयत्वंतयोरपि ॥ अतस्स्वरूपसंबंधविशेषस्सहिकश्चन ॥ २०८ ॥
इत्येवसर्वथावाच्यंनचेज्ज्ञानक्रियाफलं ॥ अर्थाभिलपनंपुंसितच्छालित्वंकथंघटे ॥ २०९ ॥

तेकिमित्यतआह ॥ त्वदुक्तेति ॥ त्वदुक्तलक्षणेन परसमवेतक्रियाजन्यफलशालित्वलक्षणेन । तयोःपूर्वोत्तरदेशयोः । अनुद्देश्यत्वादनयोस्संयोगविभागयोरफलत्वंचेत् अंत्यचरणसंयोगस्यापिनस्यादितिपुनरव्याप्तिरेव । अतः उक्तलक्षणस्यातिव्याप्तत्वात् अव्याप्तत्वाद्वा । सःविषयविषयिभावः स्वरूपसंबंधविशेषः ॥ २०८ ॥ नचे त्स्वरूपसंबंधविशेषएवविषयत्वंनचेत् । ज्ञानक्रियाफलं ज्ञानरूपक्रियाफलं अर्थाभिलपनं अर्थाभिलपनरूपव्यवहारः पुंसि । तच्छालित्वंकथंघटे विषयरूपघटे । तथाचपरस ॥ १६९ ॥

मवेतक्रियाफलशालित्वंघटेअव्याप्तत्वात्नविषयलक्षणमित्यर्थः । अतस्स्वरूपसंबंधविशेषएवविषयत्वंसर्वैर्वाच्यं । सचस्वरूपेसुतरांघटतइतिकुतोनज्ञानस्यस्वकर्मकत्वं ॥ २०९ ॥ ननुज्ञानरूपक्रियाफलंज्ञाततैव साचविषयेघटेस्तीतिकथंलक्षणस्यतत्राव्याप्तिरित्यतआह ॥ अतीतानागतइति ॥ अतीतंचानागतंचेतिद्वंद्वैकवद्भावः । तस्मिन्ज्ञाततायाअभावात् । प्रध्वंसप्रतियोगिनिप्रागभावप्रतियोगिनिज्ञाततायाअयोगादित्यर्थः । फलं ज्ञानफलंनेतिसंबंधः । ज्ञातताधारत्वेनज्ञानज्ञेयत्वकथनेअतीतानागतयोर्ज्ञेयत्वलक्षणस्याव्याप्तिरितिभावः । तत्तस्माद्विषयाश्रितज्ञातताया असंभवात् ज्ञातता ज्ञानस्यवियषत्वं । अपरान ॥ २१० ॥ साच

अतीतानागतेऽभावान्नार्थस्याज्ञातता फलं ॥ ज्ञानस्यविषयत्वंतज्ज्ञाततास्यान्नचापरा ॥ २१० ॥ साचनात्माश्रयात्कर्मलक्षणांतर्गताभवेत् ॥ क्षुद्ररज्जोरभावेनलब्धागौःकिंविसृज्यते ॥ २११ ॥ नहितेभगवन्व्यक्तिंविदुर्देवानदानवाः ॥ स्वयमेवात्मनात्मानंवेत्थत्वंपुरुषोत्तम ॥ इतिगीताविरोधश्चस्वावेद्यत्वमतेभवेत् ॥ २१२ ॥

ज्ञानविषयत्वरूपज्ञातता । कर्मणोविषयस्यलक्षणांतर्गता । तत्रहेतुरात्माश्रयादिति ॥ ज्ञानविषयलक्षणेज्ञानविषयरूपज्ञाततायाःप्रवेशनेकथंनात्माश्रयः । लक्षणायोगेनानुभवसिद्धार्थत्यागिनमुपहसति ॥ क्षुद्रेति ॥ क्षुद्ररज्जोः गोबंधकरज्जोरभावेन लब्धा दानादिनालब्धा गौर्विसृज्यतेकिं । प्रत्युत बहिर्वस्त्रेणापिबध्वागांनमुंचसि । एवमेवलक्षणायोगादनुभूतस्वकर्मकत्वमपिनमुंचेतिभावः ॥ २११ ॥ स्पष्टगीतावचनेनापिभगवतस्स्वरूपज्ञानस्यस्वविषयकत्वमुपपादयति ॥ नहीति ॥ व्यक्तिंमहिमानं ।

युक्ति-

॥ ३५ ॥

मल्लिका

शुद्धिसौ०

पुरुषोत्तम त्वंस्वयमेव आत्मना स्वस्वरूपज्ञानेना त्मानंस्वस्वरूपंवेत्थेतिसंबंधः । अत्रस्वयमेवेत्युक्त्यास्वस्यैवकर्तृत्वं आत्मानमित्युक्त्यास्वस्यैवकर्मत्वं । आत्मनात्मानमित्युक्त्यास्वरूपभूतज्ञानस्यस्वविषयत्वंचप्रतीयतइतिभावः ॥ २१२ ॥ कर्तृकर्मक्रियैकता कर्तुःकर्मणःक्रियायाश्चैकता । कर्तुरेवकर्मत्वंज्ञानक्रियायाएवविषयत्वमित्यर्थः । विभक्तीनां प्रथमाद्वितीयातृतीयाविभक्तीनां विभागेन भिन्नभिन्नपदनिष्ठत्वेन ॥ २१३ ॥ स्पष्टगीतावचनविरोधाद्भट्टोक्तलक्षणमेवोपेक्षणीयमित्याह ॥ कथमिति ॥ आगमं गीतावचनं ॥ २१४ ॥ विषयविषयिणोःपराक्प्रत्यग्भावनियमात्कथमेकस्यैवविषयविषयिभावइत्यतआह ॥ ज्ञानमिति ॥

यतोत्रवचनैस्सर्वैःकर्तृकर्मक्रियैकता ॥ विभक्तीनांविभागेनव्यक्तमेवप्रदृश्यते ॥ २१३ ॥
कथंपुंकल्पनामात्रमूलंलक्षणमेवते ॥ अन्यथीकुरुतेसर्वसंमतंस्पष्टमागमं ॥ २१४ ॥
ज्ञानंप्रत्यक्पराग्ज्ञेयमितिबाह्यार्थधीस्थले ॥ नांतरे यन्मनोज्ञानेज्ञेयःप्रत्यक्परस्तव ॥ २१५ ॥

ज्ञानंप्रत्यक् अंतस्स्थित्वाबहिर्मुखमित्यर्थः । ज्ञेयंपराक् बहिस्स्थित्वांतर्मुखमित्यर्थइत्ययंनियमः बाह्यार्थधीस्थले घटादिज्ञानस्थलइत्यर्थः । तत्रहिमनोरूपंज्ञानमांतरंसद्बाह्यविषयोल्लेखनायतदभिमुखं । घटश्चबहिस्स्थस्सन्ज्ञानविषयीकरणयोग्यतयातदभिमुखइतिबाह्यार्थस्यतज्ज्ञानस्यचपराक्प्रत्यग्भावनियमो नत्वांतरेज्ञानेविषयेच । यद्यस्मान्मनोज्ञाने मनोवृत्तिरूपज्ञाने आत्मापेक्षयाबाह्यतयापराचि । प्रत्यक् प्रत्यक्पदार्थरूपः । मनसोप्यंतर्विद्यमानत्वात्प्रत्यग्भूतइत्यर्थः । परःपरमात्माज्ञेयः । तस्माज्ज्ञान

॥ १७० ॥

स्यप्रत्यक्त्वंज्ञेयस्यपराक्त्वमितिनियमः आंतरेनेतिपूर्वेणान्वयः । नियमभंगेमनोवृत्तिरूपज्ञानेभेदघटितःपराक्प्रत्यग्भावोप्यस्ति । एकस्यैवज्ञानत्वेज्ञेयत्वेचसोपिनापेक्ष्यते । बहिःक्लृप्तनियमस्यांतर्भगवत् अंतरपिभिन्नेक्लृप्तस्वभावस्यभेदरहितेस्वस्वरूपेभंग इतिभावः । यद्यपिविशेषबलात् पराक्प्रत्यग्भावोनिर्वोढुंशक्यते । तथापिपरन्यायेनैवपरंपराभावयितुमिदमेवोक्तं ॥ २१५ ॥ ननुज्ञानज्ञेयभावस्यघटज्ञानादौभेदेसत्येवदर्शनादेकस्यैवज्ञानत्वंज्ञेयत्वंचकथमित्यतआह ॥ जडइति ॥ जडेघटपटादौ । ज्ञाना स्वरूपत्वात् ज्ञानरूपत्वाभावात् । ज्ञानरूपेतुवस्तुन्यात्मादौ स्वस्यैवज्ञानताज्ञेयताचएकस्यैवकिंनस्यादितिसंबंधः । घटादौज्ञान

जडेज्ञानास्वरूपत्वाज्ज्ञानज्ञेयविभिन्नता ॥ ज्ञानरूपेतुकिंनस्याज्ज्ञानताज्ञेयतापि
च ॥ २१६ ॥ मनोनुमित्यामानस्याकिंनानुमिमतेबुधाः ॥ ज्ञानरूपंतुयद्वस्तुस्वेना
पिज्ञेयमेवतत् ॥ अतस्स्वरूपविज्ञानेस्वयमात्माप्रकाशतां ॥ २१७ ॥ ॥

ज्ञेयविभेदस्यज्ञानास्वरूपत्वमेवतंत्रं । ज्ञानस्वरूपवस्तुनिउक्तनियमस्यापिभंगइतिभावः ॥ २१६ ॥ ज्ञानरूपेज्ञानज्ञेययोर्भेद घटितत्वनियमस्यव्यभिचारमपिदर्शयति ॥ मनइति ॥ मानस्या मनःपरिणामतयामनोरूपयाऽनुमित्या सुखादिज्ञानं सक रणकं क्रियात्वाद्रूपादिज्ञानवदित्यनुमित्या मनः बुधाःनानुमिमतेकिं । अनुमिमतएव । तत्तस्मात् ज्ञानरूपस्यम नसःमनोरूपज्ञानेनैववेद्यत्वात् । अतः ज्ञानरूपेवस्तुनिज्ञानज्ञेयविभेदनियमस्यभग्नत्वात् ॥ २१७ ॥ श्रुतेरित्यादेस्स्वप्र

काशत्वप्रतिपादकश्रुतिस्मृत्यनुभावानामित्यर्थः । बाधःअपलापः । अन्यार्थकथनंवा । स्मृतेरनुभवस्यचप्रागेवोक्तत्वात् स्वप्र काशत्वप्रतिपादिकांश्रुतिमाह ॥यतइति ॥ तदात्मानमेवावेदित्युपनिषत् तद्ब्रह्म आत्मानमेव स्वस्वरूपमेव आवेत् आवेदेतिस्व प्रकाशत्वंयतःजगौ । अतश्श्रुतेर्बाधःकुतइतिपूर्वेणान्वयः ॥ २१८ ॥ एकस्यैवकर्तृकर्मभावानंगीकारिणंप्रतिसोपहासमुत्तरमाह ॥ **नचेदिति** ॥ नचे देकस्यैवकर्तृकर्मभावोनचेत् । एवमसंबद्धंवदतस्तवमरणेसतिपट्टमहिषी स्वोरस्ताडनपूर्वकंकथंविलपेत् ।

**श्रुतेस्स्मृतेःकुतोबाधःक्रियतेनुभवस्यच ॥ यतस्तदात्मानमेवावेदित्युपनिषज्जगौ**
**॥ २१८ ॥ नचेदेवमसंबद्धंवदतोमरणेकथं ॥ विलपेत्पट्टमहिषीस्वोरस्ताडनपूर्वकं**
**॥ २१९ ॥ अवांतरविशेषेणयद्येकत्रापितद्भवेत् ॥ आत्माकर्म क्रियाज्ञान मित्य**
**त्रापिविशेषणे ॥ अवकाशोस्तियच्छब्दाअपर्यायास्तयोस्सदा ॥ २२० ॥ ॥**

स्वोरस्ताडनेहिस्वस्याएवताड्यमानत्वंताडयितृत्वंचकथंस्यादितिभावः ॥ २१९ ॥ अवांतरविशेषेण हस्तोरस्स्थलादिविशेषेण एक त्रएकस्मिन्देहेपि तत्कर्तृत्वंकर्मत्वंच । अत्रापिब्रह्मण्यपि आत्मापरमात्मा कर्मविषयः । तस्यज्ञानं क्रियेतिविशेषणेऽवकाशोस्ति । तयोर्ब्रह्मज्ञानयोः शब्दाः ब्रह्मात्मादिब्रह्मवाचकशब्दाः ज्ञानज्ञप्त्यादिज्ञानवाचकशब्दाः अपर्यायाः घटकरीरादिशब्दवत्पर्याय प्रयोज्यान किंतुघटपटादिशब्दवत्सहप्रयोज्याएव । अतः ब्रह्मणितज्ज्ञानस्यसविशेषाभेदएववक्तव्यः । नत्वत्यंताभेदः । अतस्त ॥ १७१ ॥

वेवममाप्यवांतरविशेषेणएकस्यक्रियाकर्मभाघघटनेतिभावः । एवमेकस्यैवात्मनःस्वज्ञानप्रयत्नदशायांकर्तृत्वं ज्ञानदशायांकर्मत्वं चेतिद्रष्टव्यं ॥२२०॥ ननुमनोनुमितौमनसोज्ञेयत्वंज्ञानत्वंचास्ति । कर्तृत्वंतुआत्मनएव । उरस्ताडनेपिकर्तृत्वंकर्मत्वंचैकस्यदेह स्यास्ति । क्रियात्वंतुनदेहस्य । ब्रह्मणिकर्तृत्वंक्रियात्वंकर्मत्वंचकथमेकत्रस्यादित्यतःप्रागुक्तदृष्टांतांतरमपिस्मारयन्नुत्तरमाह ॥ **माम हमिति** ॥ कर्तृत्वकर्मतेइत्युपलक्षणं । क्रियात्वंचग्राह्यं । एकस्यात्मनएव मामितिकर्मत्वं अहमितिकर्तृत्वं नजानामीतिअज्ञान ज्ञानरूपत्वंचयथा तथाक्वापि मामहंजानामीत्यत्रापीत्यर्थः । क्रियाकर्मैक्यमित्युपलक्षणं । क्रियाकर्मकर्त्रैक्यंचेत्यर्थः । अथवा यु ष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तावित्यादिभाष्यकारवचनेन प्रत्यग्भूत

**मामहंनविजानामीत्यत्रकर्तृत्वकर्मते ॥ यथैकस्यतथाक्वापिक्रियाकर्मैक्यमुच्यतां ॥ २२१ ॥**

मात्मतत्वं कथंपराग्भूतंविषयतत्वंस्यादितिविवरणोक्त्याच कर्तृकर्मभावविरोधादितिवदतोपिक्रियाकर्मभावविरोधएवतात्पर्यं । अतस्तदुपपादनायैवदृष्टांताःकथ्यंते । तत्रकेचित्साक्षात्क्रियाकर्मैक्यघटकाःसाक्षादेवसंबध्यंते । केचित्तु कर्तृकर्मैक्यघटकाअपि यथाविरुद्धयोःकर्तृत्वकर्मत्वयोरेकत्रघटना तथाविरुद्धयोःक्रियाकर्मत्वयोरपिएकत्रघटनाऽस्त्वितिपरंपरयासंबध्यंते । अस्मि न्पक्षे मामहंनविजानामीतिश्लोकेयथास्थितैवयोजना । कर्तृत्वकर्मत्वेपरस्परविरुद्धेअपि यथैकत्र अज्ञानज्ञानदशायां मामह मित्यात्मनएवकर्मत्वात्कर्तृत्वाच्च । तथाक्वा प्यात्मनएवस्वज्ञानेनैवस्वस्यज्ञेयत्वस्थले क्रियाकर्मैक्यमुच्यतां । विरोधस्योभयत्रसा

म्यादित्यर्थः । एवमेवोरस्ताडनदृष्टांतस्यापिप्रकृतोपयोगोद्रष्टव्यः ॥२२१॥ दृष्टांतांतरंचाह ॥ अभिधेति ॥ अभिधाख्यया । अभिधेतिनाम्ना अभिधेयत्वंवाच्यत्वं अभिधानाम्नि अभिधेतिनाम्नि तेमतेकिंन भवत्येवेत्यर्थः । यथाभिधानामैवाभिधेयंअभिधाचा भूत् तथाप्रकृतेपि ब्रह्मैव ज्ञानंज्ञेयंचास्त्वितिभावः । नन्वेवंकर्मत्वक्रियात्वयोरेकत्वे छिदिक्रियायाश्छिद्यमानदारुणश्चैक्यंस्यादि त्यतआह ॥ प्रमाणेति ॥ २२२ ॥ स्थलांतरेपिक्रियाकर्मणोरैक्यंप्रदर्शयति। किंज्ञानेति । ज्ञानपदजन्यंयज्ज्ञानं तत्स्वविषयंनकिं भवत्येव । ज्ञानसामान्यवाचकस्यज्ञानपदस्यज्ञानमात्रविषयकज्ञानजनकत्वनियमेनतज्जन्यज्ञानज्ञानरूपस्वविषयत्वस्यापिसर्वैरं

अभिधाख्याभिधेयत्वमभिधानाम्निकिंनते ॥ प्रमाणसदसत्त्वाभ्यांव्यवस्थाचभविष्यति ॥ २२२ ॥
किंज्ञानपदजन्यंयज्ज्ञानंस्वविषयंचतत् ॥ नहितस्याप्यवेद्यस्यव्यवहारोभवन्मते ॥ २२३ ॥ तत्र
स्वविषयत्वंतत्स्वप्रकाशत्वमागतं ॥ जडेपिक्वचिदेवंचेचेतनेषुकुतोनतत् ॥ २२४ ॥ ॥

गीकृतत्वादितिभावः । बहुपुंसहायेपिक्लीबस्यपुंस्त्वादर्शनात्स्वाविषयबहुसहायेएकांशेनस्वविषयत्वमित्यपिरिक्तंवचः । अभिधा दृष्टांतेकुचोद्यानवकाशाच्च । अवेद्यत्वेसत्यपरोक्षव्यवहारयोग्यत्वंस्वप्रकाशत्वमितिवदतापिज्ञानेस्वविषयत्वमेववक्तव्यं । तथा चसर्वत्रस्वविषयत्वमेवस्वप्रकाशत्वंअननुगमपरिहारायत्वयापिवक्तव्यमित्याशयेनाह ॥ नहीति ॥ तस्य ज्ञानपदजन्यज्ञानस्य अवेद्यस्य ब्रह्मवदवेद्यस्यैवव्यवहारोनहि । किंतुस्वविषयत्वमेवात्रस्वप्रकाशत्वमितितवाप्यभिमतमिति ॥ २२३ ॥ तत्तस्मात् ।

तत्रज्ञानेस्वविषयत्वमेवस्वप्रकाशत्वमागतं बलादागतमित्यर्थः । तत्स्वविषयत्वरूपस्वप्रकाशत्वं जडे जडत्वाक्रांते क्वचिज्ज्ञाने । चेतनेषुकुतोनेतिसंबंधः ॥ २२४ ॥ स्वाभिमतस्वप्रकाशत्वंप्रसाध्य पराभिमतस्वप्रकाशत्वंदूषयति ॥ यदीति ॥ २२५ ॥ शब्दस्य स्वप्रकाशशब्दस्य विरुद्धार्थपरिग्रहे स्वाप्रकाश्यत्वरूपविरुद्धार्थपरिग्रहे । स्वावेद्यत्वंस्वाप्रकाश्यत्वमितिचपर्यायः । कोहेतुरितिवदामइतिसंबंधः । पराभिमतमनुवदति ॥ यद्येकस्येति ॥ कर्तृत्वकर्मतेइत्युपलक्षणं । क्रियात्वकर्मतेइत्यपिद्रष्टव्यं ।

यदिस्वावेद्यतास्वप्रकाशत्वमितिमन्यसे ॥ २२५ ॥ तदावदामश्शब्दस्यविरुद्धार्थपरिग्रहे ॥ कोहेतुरितियद्येकस्यैवकर्तृत्वकर्मते ॥ २२६ ॥ विरुद्धेइतिभीतोसिशब्दायोग्यार्थकल्पनात् ॥ कुतोनभीः किंचसाभीर्धावंतंत्वानुधावति ॥ २२७ ॥ दोषोयंपरवेद्यत्वेसमोयस्माद्विचारणे ॥ आत्मनोवृत्तिवेद्यत्वेकर्तृकर्मैक्यमागतं ॥ २२८ ॥ सुखादेस्साक्षिवेद्यत्वेक्रियाकर्त्रैक्यमापतेत् ॥ क्रियाकर्मैक्यमप्येवंन्यायसाम्यात्कुतोनते ॥ २२९ ॥

उत्तरमाह ॥ शब्दायोग्येति ॥ दोषांतरंचाह ॥ किंचेति ॥ २२६ ॥ २२७ ॥ अयंदोषः एकस्यैवकर्तृकर्मत्वाख्यदोषः । परवेद्यत्वे मनोवृत्तिवेद्यत्वे । मनोवृत्तिरूपक्रियायाभिन्नत्वेपिमनसाअहंमांजानामीत्यात्मनएवकर्तृत्वात्कर्मत्वाच्च । आत्मनःब्रह्मणः ॥ २२८ ॥ साक्षिवेद्यत्वे सुखमहंजानामीतिसाक्षिवेद्यत्वे क्रियाकर्मैक्यं अहमित्यात्मनएवकर्तृत्वात् । सुखानुभवस्यसाक्षि

रूपत्वेनक्रियात्वाच्च । अतःसाभीः एकस्यैवविरुद्धाकारद्वयत्वभीः धावंतंत्वानुधावतीतिपूर्वेणान्वयः । नन्वेवमपिकर्तृकर्मैक्यंक
र्तृक्रियैक्यंचागतं । नतुक्रियाकर्मैक्यमित्यतआह ॥ क्रियाकर्मैक्यमिति ॥ न्यायसाम्यात् तत्रोक्तविरुद्धाकारद्वयवत्त्वंयेन
न्यायेनसंपाद्यते । तस्यन्यायस्यक्रियाकर्मैक्येपिसाम्यादित्यर्थः । इयमपिस्वप्रकाशत्वप्रतिबंदीरूपायुक्तिरितिज्ञातव्यं ॥ २२९ ॥
परमुखेनैवचितःस्वविषयत्वमानेतुमाह ॥ किंचेति ॥ साक्ष्येव विषयावच्छिन्नाज्ञानदृक् मांनजानामीत्यज्ञानविषयीभूतेनब्रह्म
णावच्छिन्नंविशिष्टंयदज्ञानंतस्यदृक् । त्वयामायावादिनाअवश्यंवाच्येतिसंबंधः । अज्ञानं विषयतयातदवच्छेदकात्माचेतिद्वयम

किंचसाक्ष्येवविषयावच्छिन्नाऽज्ञानदृक्त्वया ॥ वाच्यावश्यंयतोवृत्तिनाश्यस्यान्या
त्रनैवदृक् ॥ २३० ॥ विषयश्चस्वयं तस्यस्वावेद्यत्वेचकीर्तिते ॥ अज्ञानवेदनस्यैवभ
वेदत्यंतवेदना ॥ अवच्छेदकदृग्व्याप्तंयतोवच्छिन्नदर्शनं ॥ २३१ ॥ ॥

पिसाक्षिणैवविषयीकार्यमित्यर्थः । नन्वज्ञानमात्रंसाक्षिविषयः विषयतयाअवच्छेदकआत्मातुमनोवृत्तिविषयएव अतःकथंस्ववि
षयत्वमित्यतआह ॥ यतइति ॥ वृत्तिनाश्यस्याज्ञानस्या त्रविषयतयाअवच्छेदकेआत्मनि । अन्या साक्षिणोन्या मनोवृत्तिरूपे
तियावत् । दृग्दर्शनं नैवेतिसंबंधः । अज्ञाभावच्छेदकस्यात्मनःमनोवृत्तिवेद्यत्वांगीकारे तस्मिन्नात्मनिपुनर्मनोवृत्तिनाश्यस्या
ज्ञानस्यज्ञानमेवनघटतइतिभावः ॥ २३० ॥ विषयःअज्ञानविषयः । स्वयं आत्मा । तस्यात्मनःस्वावेद्यत्वेकीर्तिते । उक्तरीत्याप ॥ १७३ ॥

रवेद्यत्वासंभवात् । अज्ञानवेदनस्याज्ञानज्ञानस्या त्यंतवेदना अतिसंकटंभवेदितिसंबंधः । अवच्छेदकात्मज्ञानाभावेतदवच्छिन्नाज्ञा
नज्ञानमपिसुतरांनस्यादितिभावः । तदेवोपपादयति ॥ अवच्छेदकेति ॥ २३१ ॥ नन्वात्मनोज्ञानाभावेपिज्ञानरूपत्वादेवत
दवच्छिन्नाज्ञानस्य ज्ञानव्यवहारादि संभवतीत्यतआह ॥ ज्ञानरूपत्वतइति ॥ तत्तद्गोचरतां तत्तज्ज्ञानविषयतांविना ज्ञान
रूपत्वतःकिंस्या न्नकिमपीतिसंबंधः । कुतइत्यतआह ॥ घटज्ञानमिति ॥ घटज्ञानं ज्ञानमिति ज्ञानस्वरूपमित्येतावतेत्यर्थः ।
अन्यस्य ज्ञानविषयघटादन्यस्यपटादे र्व्यवहारकृत् किं व्यवहारकृदित्युपलक्षणं । अवच्छेदकत्वकृदित्यपिग्राह्यं । यथाज्ञानरू

ज्ञानरूपत्वतःकिंस्यात्तत्तद्गोचरतांविना ॥ घटज्ञानंज्ञानमितिकिमन्यव्यवहारकृत् ॥ २३२ ॥
अतोऽज्ञानंस्वविज्ञस्यैक्षिपेत्तत्स्वप्रकाशतां ॥ चित्रमत्रापितेबाणस्तवप्राणापहारकः ॥ २३३ ॥
किंचप्रागुक्तदृष्टांतत्रितयंचनविस्मर ॥ यत्रकर्मक्रियैक्यंचसाक्षादेवनिदर्शितं ॥ २३४ ॥

पत्वेपिघटज्ञानस्यघटव्यवहारहेतुत्वमेव नतुस्वाविषयपटादिव्यवहारहेतुत्वं तथाज्ञानरूपत्वेपिब्रह्मणस्स्वाविषयत्वेस्वावच्छिन्नाज्ञा
नव्यवहारादौनैवोपयोगित्वमितिभावः ॥ २३२ ॥ अतः अवच्छेदकविषयज्ञानावश्यंभावात् । अज्ञानं भवदभिमतभावरूपाज्ञा
नं । तत्स्वप्रकाशतां । तस्यसाक्षिणस्स्वाविषयतां । अत्रापि स्वप्रकाशत्वविषयेपि । तेबाणः तवाभिमतभावरूपाज्ञानमेव । तव
प्राणापहारकः तवप्राणसमस्वावेद्यत्वापहारकः । अतोत्राप्यात्मीयएवबाणोभवंतंप्रहरतीतिन्यायेपतितोसीतिभावः ॥ २३३ ॥
प्रागुक्तदृष्टांतत्रितयं मनसोनुमितिरूपत्वमनुमेयत्वंचा भिधानाम्नःअभिधेयत्वमभिधात्वंच ज्ञानपदजन्यज्ञानस्य स्वस्यैवज्ञानत्वंज्ञे

 यत्वंचेतित्रितयमित्यर्थः ॥ २३४ ॥ वागर्थदंपत्योःवाक्चार्थश्चवागर्थौ । तावेवदंपती एकस्यस्त्रीलिंगत्वात् । अपरस्यपुंलिंगत्वादिति 
 भावः । अयोगायमतिंमाकुर्विंतिसंबंधः । स्वप्रकाशशब्दस्यस्वविषयत्वाख्यस्वारसिकार्थंमाविघटयेतिभावः ॥ २३५ ॥ अतः 
शब्दार्थविघटनायादोषहेतुत्वात् । विपक्षेबाधकमाह ॥ नचेदिति ॥ स्वानंदानुभवःस्वस्वरूपानंदानुभवः । किंबलात् कस्यब
लात् । साक्ष्यतिरिक्तेंद्रियाणांतत्राभावात् ॥ २३६ ॥ स्वप्रकाशशब्दार्थवदनूस्वप्रकाशवादमुपसंहरति ॥ अतइति ॥ अतः

वृथावागर्थदंपत्योर्नायोगायमतिंकुरु ॥ २३५ ॥ अतस्स्वावेद्यतात्याज्यास्ववेद्योपिभवे
त्प्रभुः ॥ नचेत्स्वानंदानुभवोमुक्तौमुक्तस्य किंबलात् ॥ २३६ ॥ अतस्स्वाविषयोयस्यप्र
काशोविद्यतेसदा ॥ सएवस्वप्रकाशाख्यइतिसर्वंसमंजसं ॥ २३७ ॥ मुखेनातिप्रसन्नो
पिहृदिहालाहलीखलः ॥ जल्पतस्स्वप्रकाशत्वंस्वावेद्यत्वंयतोहृदि ॥ २३८ ॥ ॥

स्वावेद्यत्वस्याशब्दार्थत्वात् असार्वज्ञाख्यदोषापादकत्वाच्च । सर्वसमंजसमित्यनेन यस्सर्वज्ञइत्यादिश्रुतेरपिसामंजस्यमभूदित्य
भिप्रैति । ब्रह्मज्ञानस्यब्रह्मागोचरत्वेश्रुतेस्संकोचाख्यासामंजस्यंस्यात् । तत्परिहारायापिस्वपराख्यसर्वविषयत्वमंगीकार्यमिति
भावः ॥ २३७ ॥ पराभिमतस्वप्रकाशत्वंनीतिविरुद्धंचेत्याह ॥ मुखेनेति ॥ हालाहलपदेनद्वेषेर्ष्यादिदोषालक्ष्यंते । तद्वानित्य 
र्थः । एतद्दुर्नीतेर्निदर्शनंमायावाद्येवेत्याह ॥ जल्पतइति ॥ स्वावेद्यत्वकथनेनहरेरसार्वज्ञस्यैवनिरूपणात्भगवन्महिम्निद्वेषेर्ष्या

दिदोषवानितिभावः ॥ २३८ ॥ पूर्वमसार्वज्ञापादनाद्दोषीत्युक्तं । अधुनाघटवज्जडत्वापादनात् ततोप्यतिशयितदोषीत्याह ॥ अन्यानिति ॥ असौ मुक्तिदशायांविद्यमानःपरमात्मा स्वपरज्ञानशून्यः मुक्तत्वादेवपरज्ञानशून्यः स्वावेद्यत्वादेवस्वज्ञानशून्यश्चजातइति घटस्स्या दथवापटइतिसंबंधः ॥ २३९ ॥ ब्रह्मणस्स्वावेद्यत्वेमुक्तेरमुक्तित्वप्रसंगइतिदृष्टांतमाह ॥ किंस्वादुनेति ॥ तत्स्वरूपसुखं । अननुभूयमानगुडरसवदननुभूयमानसुखमपिनप्रयोजनमितिभावः ॥ २४० ॥ शिष्टोपिचोरस्यचोरइव चोर

अन्यानजानन्नप्यंधोजानात्यहमितिस्फुटं ॥ स्वपरज्ञानशून्योसौघटस्स्यादथवापटः ॥२३९॥
किंस्वादुनागुडेनापि यद्रसोनानुभूयते ॥ किंस्वरूपसुखेनस्याद्यदितन्नानुभूयते ॥ २४० ॥
चोरस्यचोरइशिष्टोपिशिष्टइशिष्टस्यकेवलं ॥स्वाज्ञंतत्किल सर्वज्ञंमुक्तंस्वानंदभोक्तृच॥२४१॥
यदिस्वरूपविज्ञानंनैवस्वविषयंभवेत् ॥ तदास्वव्यवहारश्चकथंतस्मादुदीर्यतां ॥ २४२ ॥
घटज्ञानंमनोरूपं नमनोव्यवहारकृत् ॥ विषयस्यघटस्यैवव्यवहारकृदिष्यते ॥ २४३ ॥

शिष्टमपिस्वात्मवच्चोरंमन्यते । एतदपिमायिन्येवदृष्टमित्याह ॥ स्वाज्ञमिति ॥ सर्वज्ञंमुक्तंस्वानंदभोक्तृय त्तद्ब्रह्म स्वाज्ञंकिल स्वज्ञानेनापिशून्यंकिल । अतशिष्टस्यस्वात्मवच्चोरत्वापादकचोरवदयमपिवादीतिभावः ॥ २४१ ॥ अधुनास्वावेद्यत्वस्वव्यवहारजनकत्वयोरेकत्रासंभवेनपरोदीरितस्वप्रकाशत्वलक्षणमनुपपन्नमित्याह ॥ यदीति ॥ तस्मा त्स्वाविषयकज्ञानात् । अतस्स्वाविषयकत्वं स्वव्यवहारहेतुत्वमितिविशेषणद्वयमेकत्रनसंभवतीतिभावः ॥ २४२ ॥ स्वावेद्यत्वेपिज्ञानरूपत्वात्स्वव्यवहारहेतुत्व

मित्यतआह ॥ घटज्ञानमिति ॥ नमनोव्यवहारकृत् मनोव्यवहारकृन्न । किंतुविषयस्येत्यादियोजना ॥ २४३ ॥ अतः मनो विषयत्वरहितमनोरूपघटज्ञानस्यमनोव्यवहाराजनकत्वदर्शनात् । व्यवहारेअप्रयोजकमितिपदच्छेदः ॥ २४४ ॥ ननुसुखानुभ वाभावेपिसुखरूपत्वान्मुक्तिःफलंभविष्यतीत्यतआह ॥ सुखरूपत्वमिति ॥ व्यभिचारतः फलत्वव्यभिचारात् । नफलं मुक्तौ नफलमित्यर्थः । किंतर्हिफलमित्यतआह ॥ किंत्विति ॥ २४५ ॥ तथैव सुखरूपत्ववदेव । आत्मनिमुक्तचैतन्ये । सुखरूपत्वं

अतस्तद्विषयज्ञानमेवतद्व्यवहारकृत् ॥ ज्ञानस्वरूपतामात्रंव्यवहारेऽप्रयोजकं ॥ २४४ ॥
सुखरूपत्वमप्येवंमनसिव्यभिचारतः ॥ नफलं किंतुनिर्दुःखसुखस्यानुभवःफलं ॥ २४५ ॥
तथैवसुखरूपत्वंज्ञानरूपत्वमात्मनि ॥ नफलं यन्मनोबाह्यज्ञानरूपंसुखात्मकं ॥ २४६ ॥
यथामानससौख्यस्यसाक्षिणानुभवःफलं ॥ संसारे मुक्तिकालेचफलंवाच्यंतथैवहि ॥ २४७ ॥

ज्ञानरूपत्वंचेतिमिलितमपिनफलं । यद्यस्मा न्मनः बाह्यघटादिज्ञानरूपं सुखात्मकं विषयजन्यसुखस्यमनःपरिणामरूपत्वात्सु खरूपंचभवति । तस्मान्मुक्तेरपिसुखरूपत्वंज्ञानरूपत्वंनफलमितिपूर्वेणान्वयः । बाह्यज्ञानरूपमित्युक्त्या यथातस्यज्ञानस्यसुख विषयत्वाभावान्नफलता तथाब्रह्मस्वरूपभूतज्ञानस्यापिस्वरूपभूतसुखाविषयत्वेकथंफलतेतिसूचयति ॥ २४६ ॥ तर्हिकथंसुखस्य फलतेत्यतस्तद्दृष्टांतंफलत्वप्रकारंदर्शयति ॥ यथेति ॥ संसारेमानससौख्यस्य साक्षिणाऽनुभवः मानससुखविषयकसाक्ष्यनुभव



इतियावत् । यथाफलं तथैवस्वरूपभूतसुखविषयकानुभवएवफलंवाच्यमितिसंबंधः ॥ २४७ ॥ एतदनंगीकारेमुक्तेरपुरुषार्थत्वं स्यादित्याह ॥ नचेदिति ॥ तदामुक्तौ ॥२४८॥ अतःमुक्तेःपुरुषार्थतायाआवश्यकत्वात् । स्वगोचरत्वंस्वविषयकत्वं । आनर्थक्यं अपुरुषार्थत्वं पदयोग्यार्थशून्यत्वंच ॥ २४९ ॥ कोसौपदलभ्यार्थइत्यतस्तंस्मारयन् तदनंगीकारेप्रागुक्तगीताविरोधंचस्मारयति ॥ स्वस्येति ॥ तस्मान्मुक्तानंदस्यस्वसाक्षिणाविषयीकरणावश्यंभावात् । हार्दंहृदिस्थं । हालाहलं हालाहलप्रायं । स्वाविषयत्वं

नचेदपुरुषार्थत्वंमुक्तेस्स्यादुक्तवर्त्मना ॥ तस्मात्स्वरूपानंदस्यनानुभूतिःकथंतदा ॥ २४८ ॥
स्वगोचरत्वमेवातोवक्तव्यास्वप्रकाशता ॥ आनर्थक्यंनचेन्मुक्तेस्स्वप्रकाशपदस्यच ॥ २४९ ॥
स्वस्यप्रकाशोयस्यस्यात्स्वप्रकाशंतदेवहि ॥ गीतावाक्येकर्मतायाव्यक्तोक्तिश्चविरुध्यते ॥ हार्दं
हालाहलंतस्मात्स्वस्यैवक्लेशकारकं ॥ २५० ॥ नित्यशुद्धंतुयद्ब्रह्मपरब्रह्मतदेवहि ॥ नित्यशुद्ध
श्चभगवान्नित्यमुक्तोममप्रभुः ॥ बंधमूलोयतोदोषोबंधाभावेनकश्चन ॥ २५१ ॥ ॥

स्वस्यैव क्लेशस्य मुक्तेरमुक्तित्वसंपादनक्लेशस्य कारकमभूदित्यर्थः । यथास्वोदरस्थविषेणस्वस्यैवहानिर्भवतितथेतिभावः ॥ २५० ॥ इदानींविष्णवाख्यपरब्रह्मणःपरोदीरितंयच्छबलत्वाख्यापरब्रह्मत्वंतदपियुक्त्यानिराकरोति ॥ नित्यशुद्धमिति ॥ यद्ब्रह्म नित्य शुद्धं अज्ञानसंसारादिदोषाशबलितं तदेवपरब्रह्म । हीत्यनेनश्रुत्यादिप्रसिद्धिंसूचयति । ममप्रभुर्भगवान्नित्यमुक्तइतिकृत्वा नि

त्यशुद्धश्च नित्यमुक्तत्वान्नित्यशुद्धत्वं व्यतिरेकेणदेवदत्तवत् । नित्यशुद्धत्वाच्चव्यतिरेकेणतद्धदेवपरब्रह्मत्वंचेतियावत् । नित्यमु-
क्तत्वंच सर्वदासंसाररहितचेतनत्वं । नित्यशुद्धत्वंचाज्ञानभ्रमादिदोषरहितचेतनत्वमितिनकश्चित्क्षुद्रोपद्रवः । मुक्तस्याज्ञानादि
दोषशून्यत्वंसर्ववादिसंप्रतिपन्नमितिनाप्रयोजकत्वशंकाच । तदेवस्पष्टयति ॥ बंधमूलइति ॥ २५१ ॥ स्वाभिमतब्रह्मणःपर
ब्रह्मतांप्रसाध्य पराभिमतब्रह्मणस्तदभावंपरप्रक्रिययैवोपपादयति ॥ तवब्रह्मत्विति ॥ बहुजीववादिपक्षमभिप्रेत्यसदेत्युक्तं ।
एकस्याज्ञाननिवृत्त्याख्यमुक्तावप्यपरस्मिन्नज्ञानानुवर्तनादितिभावः । अतएवभवपंकेनमलिनं । ननुसंसारस्यपरिच्छिन्नत्वेनाप

तवब्रह्मत्वविद्याख्यदोषेणकलिलंसदा ॥ अनादिकालमारभ्यदेहेदेहेचसंसरत् ॥ २५२ ॥
भवपंकेनमलिनंकथंशुद्धंभवेद्धद ॥ ब्रह्मत्वमाग्रहादेवजीवचैतन्यमेवतत् ॥ २५३ ॥ बंधस्या
वास्तवत्वेनबद्धंशुद्धंतदेवचेत् ॥ तवाशेयंश्रुतिस्त्वाहसखायौसयुजौसदा ॥ २५४ ॥ ॥

रिच्छिन्नस्यब्रह्मणःक्वचिदंशेशुद्धताप्यस्तीतिचेत् । किमनेन । नहिपादेवेदनवानन्यत्रतदभाववान्पुरुषोवेदनान्मुक्तइत्युच्यते ।
अन्यथातार्किकमतेव्याप्तत्वेनाभिमतजीवानांक्वचिद्देहवत्त्वमात्रेणकथंबद्धता । त द्ब्रह्मत्वेनपराभिप्रेतंचैतन्यं ॥ २५२ ॥ २५३ ॥
शंकते ॥ बंधस्येति ॥ बद्धं मिथ्याभूतबंधाश्रयत्वात्बद्धं । वस्तुस्थितिमपेक्ष्यशुद्धंचेत्यर्थः । तदेव संसारिचैतन्यमेव । उत्तर
माह ॥ तवेति ॥ इयं एकस्यैवबद्धत्वशुद्धत्वसंपादनरूपातवाशा । आशेत्यनेनाशामात्रमिदं । वस्तुगत्याबंधस्यात्यंताभावप्रति

योगित्वरूपमिथ्यात्वेनरजतत्वेनभ्रांतिविषयशुक्तेःशुक्तित्ववत्शुद्धत्वमेवस्यात् । नतुशुद्धत्वबद्धत्वरूपविरुद्धाकारद्वयं । नहिशुक्तिः शुक्तीरजतंचेतिकेनापिव्यवह्रियतइतिसूचयति । श्रुतिस्त्वाहेतितुस्पष्टोत्तरमितिज्ञातव्यं । द्वासुपर्णेत्यादिरूपाश्रुतिरितिसंबंधः । स युजौ समानदेशेसंबंध्यस्थितौ । सदेत्यनेनमुक्तावपीयमेवश्रुतिर्जीवब्रह्मणोर्भेदंबोधयतीतिसूचयति । सायुज्यस्यसख्यस्यचतत्रैव संभवात् । मुक्तावपिमुक्तानांलीलाविग्रहग्रहणसद्भावात् समानंवृक्षमित्यपिघटते । ज्ञानोत्तरकालीननिवृत्तिकर्मणांमुक्तावानंदा भिवृद्धिहेतुत्वस्य नहास्यकर्मक्षीयते । अस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजतइत्यादिनाश्रुतत्वात् पिप्पलंस्वाद्वत्तीत्यपिघटते ।

खगावश्नदनश्नंतौदेहेदेहेकृतास्पदौ ॥ द्वासुपर्णेत्यादिरूपासातवाशालतांदहेत् ॥ २५५ ॥ बंध
मिथ्यात्वतोमुक्तमस्तुबद्धंकथंभवेत् ॥ शुक्तौरूप्यत्वमिथ्यात्वेशुक्तितैवनरूप्यता ॥ २५६ ॥
व्यावहारिकता या ते राजखड्गक्षतिर्हिंसा ॥ मरणे नविशेषोऽस्तिबद्धत्वंगतमेवते ॥ २५७ ॥

केवलंसुखरूपत्वात्स्वाद्वित्यपितत्रैवघटते । संसारेतुअस्वादुनएवदुःखमिश्रसुखस्याभिमानिकमेवहिस्वादुत्वंवक्तव्यं । सुपर्णपदो क्तपूर्णत्वंचतत्रैवोभयोर्जीवपरयोर्मुख्यंसंभवति । ततश्चव्यावहारिकभेदपरताऽस्याश्रुतेर्दूरापास्तेतिभावः । सा द्वावितिबद्धमु क्तयोर्द्वित्वप्रतिपादिका ॥ २५४ ॥ २५५ ॥ अधुनाप्रागाशेत्यनेनसूचितमर्थंस्पष्टमाह ॥ बंधमिथ्यात्वतइति ॥ अस्यार्थस्तु प्रागुक्तएव ॥ २५६ ॥ ननुबंधस्यमिथ्यात्वेपिव्यावहारिकत्वाद्बद्धत्वव्यवस्थापकत्वंभविष्यतीत्यतआह ॥ व्यावहारिकतेति ॥

राजखड्गक्षतिः राजकरधृतखड्गाज्जातव्रणमित्यर्थः । ब्रह्मज्ञानाद्बाधोहिव्यावहारिकतानाम । तस्माद्राजखड्गक्षतिरित्युक्तं । मरणे नासीदस्तिभविष्यतीत्युक्तबाधरूपमरणे । ते बंधमिथ्यात्ववादिनः ॥ २५७ ॥ अतः उक्तरीत्याएकस्यैवपराभिमतबद्धत्वमुक्तत्वायोगात् । अपरःजीवः । मुक्तोपिचापरइत्यत्रापरःपरमात्मा ॥ २५८ ॥ स्थित्यदनाभ्यामितिसूत्रेणोदितौद्वौजीवपरमौ । आवयोः तवचममच । तत्सूत्रव्याख्यानावसरेउभाभ्यामेवंवक्तव्यत्वादितिभावः ॥ २५९ ॥ सूत्रांतरंचाह ॥ गुहामिति ॥

अतोबद्धोपरस्तस्मान्नित्यमुक्तोपिचापरः ॥ इत्येवसर्वथावाच्यमित्थंसूत्रकृदाहहि ॥ २५८ ॥
आवयोश्चमतौद्वौस्थित्यदनाभ्यामितीरितौ ॥२५९॥ गुहांप्रविष्टावात्मानौहितदर्शनतास्त्विति ॥
सूत्रंव्याकुर्वतोजीवपरौद्वौहृदितेमते ॥ २६० ॥ सत्वंरजस्तमइतिगुणाजीवस्यनैवमे ॥ इति
त्रिगुणशून्यत्वंस्वस्योक्त्वाहरिरंजसा ॥ स्वाधीनगुणतोबंधोजीवस्यैवेतिशंसति ॥ २६१ ॥

अनेन गुहांप्रविष्टावात्मानौहितदर्शनादितिसूत्रंसंगृह्णाति । सूत्रमुक्तसूत्रं । ते मायावादिनः । जीवपरौद्वौहृदि बुद्धिजीवाविति सांख्यपक्षंनिराकृत्य जीवपरमात्मानावितिसिद्धांतीकरणाद्धृदीत्युक्तं ॥ २६० ॥ बद्धोमुक्तइतिह्याख्यागुणतोमेनवस्तुतइतिभागवतेकृष्णेनस्वस्यैवबद्धत्वमुक्तत्वकथनात् कथंनित्यमुक्तत्वमित्याशंकांपरिहर्तुमाह ॥ सत्वंरजस्तमइत्यादिना ॥ इतितस्मिन्नेव प्रकरणेभगवद्वचनेनस्वस्यांजसात्रिगुणशून्यत्वमुक्त्वा । नैवेत्यवधारणाभिप्रायः ॥ अंजसेति ॥ अनेन व्यावहारिकगुणाःसंति



परमार्थतोनसंतीत्यादिकुत्सितयोजनानिरस्तावेदितव्या । कथंचिद्गुणसद्भावेनैवेत्यवधारणायोगादितिभावः । ततःकिंप्रकृतइत्यतआह ॥ स्वाधीनेति ॥ पूर्वोक्तवाक्येनस्वस्मिन्गुणाभावावधारणा न्मेगुणतइतिवाक्येपिमदधीनगुणतइत्यर्थोवक्तव्यइतिभावः । सत्वंरजस्तमइतिगुणाजीवस्येतिवचने गुणाधारतयाजीवस्यैवश्रवणा द्बद्धोमुक्तइत्यस्मिन्नेवश्लोके नमेबंधोनमोक्षणमितिस्वस्यबंधाभावश्रवणाच्च। बंधइत्युपलक्षणं। मुक्तिरित्यपिद्रष्टव्यं। बंधस्यौपाधिकत्वेतन्निवृत्तिलक्षणमुक्तिरप्यौपाधिकी ज्ञानानंदरूपतयास्वाभाविकमुक्तेःपूर्वमपिविद्यमानत्वात् । अतउभयोरपिगुणाधीनत्वमितिबोध्यं । जीवस्यैवेतिपदमनुवर्तनीयमितिभावेनोक्तं । जीवस्यै

बद्धोमुक्तइतिह्याख्यागुणतोमेनवस्तुतः ॥ गुणस्यमायामूलत्वान्नमे(बंधोनमोक्षणं)मोक्षोनबंधनं
॥२६२॥ मदधीनगुणाज्जीवेबद्धाख्या नस्वभावतः ॥ इतिपूर्वार्धवाक्यार्थो मे धनाज्जीवतीतिवत् ॥ २६३ ॥

वेति ॥२६१॥ उपयुक्तप्रमेयमुक्त्वाश्लोकार्थमाह ॥ मदधीनेति ॥ मे मम धनाज्जीवतीतिवत् । यथा मे धनाज्जीवतीत्येवार्थोलभ्यते नतुमदंगाश्रितधनादिति । तथामेगुणतइत्युक्तेपिमदधीनगुणादित्येवार्थोलभ्यते । अन्यथाप्रागुक्तवचनविरोधादितिभावः। नवस्तुतइत्यस्यार्थोनस्वभावतइति ॥ सदावस्तुंशीलमस्यास्तीतिवस्तु इतिव्युत्पत्त्यावस्तुपदेनस्वभावएवोच्यतइतिभावः। सत्वादिगुणवशाद्बद्धाख्येत्युक्तेबंधस्यौपाधिकत्वमेवलभ्यते । नमिथ्यात्वमितिभावः । पूर्वार्धवाक्यार्थः पूर्वार्धरूपवाक्यस्यार्थः । इदमुक्तंभवति । मेगुणतः मदधीनसत्वादिगुणतः जीवस्य बद्धोमुक्तइत्याख्याहि । नवस्तुतः नस्वभावत इतिपूर्वार्धस्यार्थो नतु

मेममैवगुणतस्सत्वादिगुणवशाद्बद्धोमुक्तइत्याख्या नतुवस्तुतः तत्वतइतिमायावाद्यभिलषितार्थइति । कथंचित् बंधमात्रस्यमिथ्यात्वसंभवेपि बंधनिवृत्तिरूपमुक्तत्वस्यमिथ्यात्वासंभवेननवस्तुतइत्यस्यास्मदुक्तरीत्यैवार्थस्त्वयापिवक्तव्यइति परोक्तार्थेदूषणांतरंचद्रष्टव्यं । अस्मन्मतेतु बंधस्यबंधध्वंसदशायामभावेन बंधध्वंसस्यचबंधदशायामभावेनउभयोरप्यसदातनत्वादस्वाभाविकत्वमितिनकश्चित्क्षुद्रोपद्रवः ॥ २६२ ॥ २६३ ॥ परोक्तार्थेप्रागुक्तदूषणमनुवदन्पुनरपिदोषद्वयमाह ॥ स्वस्यैवेति ॥ उक्तवाक्यतः सत्वंरजस्तमइतिगुणाजीवस्यनैवमइत्युक्तवाक्यतः गुणस्यमायामूलत्वान्नमेमोक्षोनबंधनमितिउत्तरार्धस्य एकस्यैवममांशस्ये

स्वस्यैवगुणतोबंधइत्यर्थस्तूक्तवाक्यतः ॥ उत्तरार्धोत्तरश्लोकपर्यालोचनयाचन ॥ २६४ ॥
मायामूलगुणाभावान्नमेमोक्षोनबंधनं ॥ इत्युत्तरार्धेयत्कृष्णस्स्वस्यबंधंनिषेधति ॥ २६५ ॥

त्युत्तरश्लोकस्यच पर्यालोचनया ॥ २६४ ॥ उत्तरार्धपर्यालोचनाप्रकारमाह ॥ मायामूलेति ॥ मायामूलगुणाभावादित्यनेन गुणस्य सत्वादिगुणस्य मायामूलत्वात् मायैवप्रकृतिरेवमूलंयस्यसःतत्त्वात् । तस्यचगुणस्यमायारहितेमय्यभावादित्यर्थउक्तोभवति । यद्यपिमूलेगुणस्यमायामूलत्वमात्रमुक्तं । नतुतस्यगुणस्यस्वस्मिन्नभावः । तथापि नबंधनमित्युक्तबंधाभावघटकतयागुणाभावोप्यर्थतउक्तएवेतिद्रष्टव्यं । मेमम बंधनं बंधोपिन मोक्षोपिन । प्रकृतिमूलाहिगुणाः । अप्राकृतेमयिप्रकृतिमूलगुणाभावेन बंधोबंधान्मोक्षश्चकथंस्यादित्यर्थः । मायामूलत्वादितिहेतुगर्भंविशेषणं । गुणस्यमायामूलत्वात् मायायाश्च मायांव्युदस्य

चिच्छक्त्येतिश्रुत्यामय्यभावात् तन्मूलगुणाभावः । गुणाभावेतन्मूलबंधाभावः । बंधाभावेचप्रतियोगिसत्तापूर्वकबंधध्वंसाख्य मोक्षाभावश्च । अतोनित्यमुक्तएवाहं । जीवस्तुबद्धइतिभावः । अन्यथा नित्यमुक्तोनित्यबद्धएकएवेतिमेमतिरितिपूर्वाध्यायांते उद्धवेनोक्तपूर्वपक्षस्येदमुत्तरंकथंस्यात् । ममपक्षेतुमुक्तावपिस्वामिभृत्यभावसद्भावेनभक्त्यादिबंधसद्भावान्नित्यबद्धत्वंजीवस्य कृष्णस्यतुनित्यमुक्तत्वमेव । अतस्त्वदुक्तपूर्वपक्षोनघटतइतियोजनासंभवात् । अतएववक्ष्यति अथबद्धस्यमुक्तस्यवैलक्षण्यंवदा मिते । विरुद्धधर्मिणोस्तातस्थितयोरेकधर्मिणीति । एवंचोत्तरार्धेस्वस्यभगवतास्पष्टंबंधमोक्षाभावकथनात् । पूर्वार्धेबद्धमुक्ता द्याख्याभगवदधीनगुणवशाज्जीवस्येत्युच्यते । नतुस्वस्यैव । तथासति पूर्वार्धस्यउत्तरार्धेनसहविरोधादितिभावः । गुणस्य माया मूलत्वात् मायिकत्वात् मिथ्यात्वात् । मेपरमार्थतोबंधमोक्षादिकंनास्तीति पराभिप्रेतार्थस्तु वस्तुतःपरमार्थतोमेबद्धोमुक्तइत्या ख्या नेतिपूर्वार्धेपिकथितत्वात् पुनरुक्तंस्यात् । एतादृशबंधमोक्षाभावस्यजीवेपिसंभवात् स्थलद्वयेपिमेइत्यस्यवैयर्थ्यापत्तेश्चा युक्तः । गुणस्यमिथ्यात्वे गुणतो मे बद्धोमुक्तइत्याख्येति गुणनिमित्तकबंधादिशब्दानांस्वस्मिन्ननुशासनायोगाच्च । गुणतः गुण भ्रांतितः आख्यामात्रमित्यर्थकथनेश्रुतहान्यश्रुतकल्पनाप्रसंगः । अतएवपरमार्थतोबंधमोक्षाभावः अपरमार्थतोबद्धत्वमुक्तत्वाख्ये त्यपिपरास्तं । परमार्थतः अपरमार्थतइतिपदद्वयस्याश्रुतत्वात् । अपारमार्थिकरजतत्वेनशुक्तेरजताख्याया अदर्शनेनायुक्तंच । व्याव हारिकत्वमादायबद्धत्वादिघटनायांचबंधशून्यत्वाद्युक्तेरयोगात् । नहिव्यावहारिकघटत्ववतिघटेघटत्वशून्यतापिकथ्यते । व्यव हारतइत्यस्याश्रुतत्वेनाश्रुतकल्पनायाअपरिहाराच्च । एकस्यैवव्यावहारिकत्वपारमार्थिकत्वाभ्यां गुणभावाभावकल्पना गुणाजीव

स्यनैवमइतिवदतोग्रंथकारस्यानभिप्रेताच । अतोयत्किंचिदेतत् । यत् यस्मात् ॥२६५॥ अधुनाउत्तरश्लोकपर्यालोचनाप्रकारमाह ॥ एकस्यैवेति ॥ २६६ ॥ श्लोकार्थमाह ॥ स्वभिन्नांशस्येति ॥ ममांशस्येत्यर्थकथनंस्वभिन्नांशस्येति । जीवानांबहुत्वादेक स्येत्येतत्कथमुपपद्यतइत्यतउक्तंजीवाख्यखगस्येति । सुपर्णावेतौसयुजौसखायावित्युत्तरपद्येखगद्वयतयावर्णितयोर्जीवपरयोर्मध्ये एकस्यजीवाख्यखगस्येत्यर्थः । परमाख्यखगभिन्नखगत्वेनजीवानामेकीकरणादेकस्येत्युक्तमितिभावः । अथबद्धस्यमुक्तस्यवैलक्ष ण्यंवदामिते । विरुद्धधर्मिणोस्तातस्थितयोरेकधर्मिणीतिउत्तरश्लोके सुपर्णावेतौसयुजौसखायावित्युत्तरश्लोकेच स्पष्टंजीवपरयो

एकस्यैवममांशस्यजीवस्यैवंमहामते ॥ बंधोस्याऽविद्ययानादिर्विद्ययाचतथेतरः ॥ २६६ ॥
स्वभिन्नांशस्यजीवाख्यखगस्यैकस्यकेवलं ॥ बंधश्चबंधान्मोक्षश्चनस्वस्येत्याहसप्रभुः ॥ २६७ ॥

र्भेदकथना दस्मिन्पद्येचममांशस्येत्यंशत्वकथनाद्वाक्यद्वयपर्यालोचनया भिन्नांशस्येत्युक्तं । अस्मिंश्चपद्येएकस्यजीवस्यैवेति बंधमोक्षयोर्जीवेऽवधारणात्स्वस्मिन्निवारणाच्चभिन्नांशस्येत्युक्तं । स्वरूपांशत्वेतुजीवस्यैव नमेइतिकथंविभागइतिभावः । इदंच विशेषणंबंधस्यैवौपाधिकत्वेहेतुगर्भं । सार्वकालीनस्वभिन्नांशत्वघटकस्यानंदादिसाद्दश्यस्येवास्वाभाविकत्वादितिहेतोस्सूचनात् । एकेत्यस्यार्थःकेवलमिति । केवलंजीवस्यैव नस्वस्येत्यर्थः । अतएवोक्तं सप्रभुर्नस्वस्येत्याहेति । तथाचोत्तरश्लोकेजीवस्यैवावि द्ययाबंधः विद्ययामोक्षइत्युभयोरपिस्पष्टंजीवनिष्ठत्वकथना त्पूर्वश्लोकेपि बंधमोक्षयोर्जीवनिष्ठतैवयथाभवतितथायोजनीयमिति 

भावः ॥ २६७ ॥ उत्तरपद्यादस्मात्पूर्वपद्येजीवस्येतिविशेषणाकर्षणाययुक्त्यंतरमप्याह ॥ एवमित्यनुवादेनेति ॥ उत्तरपद्ये जीवस्येतिविशेषणात्पूर्वपद्येपिजीवस्यैवबंधमोक्षावित्यस्यार्थस्याकथने उत्तरश्लोके एवमितिपरामर्शायोगात् । अतएवास्मात्प द्यात्पूर्वपद्येजीवस्येतिविशेषणस्याकर्षणमपिन्याय्यमितिभावः ॥ २६८ ॥ एतेनान्यदपिलब्धमित्याह ॥ अतइति ॥ अतो बं धस्यकादाचित्कमोक्षस्यचजीवैकनिष्ठत्वकथना ज्जीवस्यबद्धत्वं मुक्तत्वं बंधान्मुक्तत्वंच । जीवस्य जीवस्यैव नपरमात्मनः । परमात्मनःनित्यमुक्तत्वमेव पद्यद्वंद्वेन उक्तश्लोकद्वयबलेनेत्यर्थः । कादाचित्कमोक्षस्यजीवैकनिष्ठत्वकथनादुत्तरश्लोकेपरिशेषा

एवमित्यनुवादेनयथाजीवस्यबद्धता ॥ पूर्वश्लोकेपिभवतितथैवार्थंवदेद्बुधः ॥ २६८ ॥ अतो
जीवस्यबद्धत्वंमुक्तत्वंच परात्मनः ॥ नित्यमुक्तत्वमेवेतिपद्यद्वंद्वेनसिद्ध्यति ॥ २६९ ॥ सखा
यौद्वौसुपर्णौचदेहनीडकृतास्पदौ ॥ स्वादत्त्येकःपिप्पलान्नंनिरन्नोप्यन्यईश्वरः ॥ २७० ॥

त्परमात्मनोनित्यमुक्तत्वं । पूर्वश्लोकेतुनमेमोक्षोनबंधनमितिस्पष्टंनित्यमुक्तत्वकथनेनपद्यद्वंद्वबलात्परमात्मनोनित्यमुक्तत्वंचसि द्ध्यतीतिभावः ॥ २६९ ॥ अधुनापूर्वोक्तार्थदृढीकरणाय सुपर्णावेतौसयुजौसखायौयदृच्छयाकृतनीडौचवृक्षे । एकस्तयोःखाद तिपिप्पलान्नमन्योनिरन्नोपिबलेनभूयान् । आत्मानमन्यंचसवेदविद्वानपिप्पलादोनतुपिप्पलादः । योऽविद्ययांधस्सतुनित्यबद्धो विद्यामयोयस्सतुनित्यमुक्तइत्युत्तरश्लोकद्वयार्थंसंगृह्याह ॥ सखायौद्वाविति ॥ सत्रिभुःनित्यमुक्तइत्युत्तरेणान्वयः । ततो नि

त्यमुक्तात्परमात्मनःअपरःअन्यः । बद्धः अविद्ययांधइतिपदच्छेदः । योऽविद्ययांधस्सतुनित्यबद्धइत्यस्यप्रतिपदमिदं । पूर्वः परमात्मा विद्यामयः निरवधिकज्ञानस्वरूपः । विद्यामयोयस्सतुनित्यमुक्तइत्यस्यार्थकथनमिदं । प्रभुःकृष्णः । पूर्वोक्तं बद्धोमुक्तइतिद्याख्येतिपूर्वपद्योक्तंजीवस्यबद्धत्वमुक्तत्वंस्वस्यनित्यमुक्तत्वंच । योऽविद्ययांधस्सतुनित्यबद्धइतिजीवस्यविभज्यनित्यबद्धत्वकथनात् विद्यामयोयस्सतुनित्यमुक्तइतिपरमात्मनोनित्यमुक्तस्यचविविच्यकथनात्स्पष्टमित्युक्तं । अत स्स्पष्टतयाजीवपर

बलेनभूयान्सविभुर्नित्यमुक्तस्ततोपरः॥जीवोबद्धोऽविद्ययांधःपूर्वोविद्यामयःकिल ॥ २७१ ॥
इतिपूर्वोक्तमेवार्थंस्पष्टमाहपुनःप्रभुः ॥ अतःपूर्वोक्तवाक्यार्थोप्यस्मदुक्तोनचापरः ॥ २७२ ॥
नित्यमुक्तोनित्यबद्धएकएवेतिमेमतिः ॥ इत्थंबद्धस्यमुक्तस्यचैक्यशंकाकृदुद्धवं ॥ २७३ ॥

योर्बद्धत्वमुक्तत्वकथनात् । पूर्वोक्तवाक्यार्थः बद्धोमुक्तइतिद्याख्येतिपूर्वोक्तवाक्यार्थः अस्मदुक्तः जीवस्यबद्धमुक्तता परमात्मनोनित्यमुक्ततायथाभवति तथाअस्मदुक्तः । अपरः परमात्मनएवबद्धत्वंचमुक्तत्वंचयथाभवति तथापरोदीरितःप्रतिवाद्युक्तः । अस्मदुक्तार्थस्यपूर्वोत्तरानुगुणत्वात् । परोदीरितस्यचपूर्वोत्तरविरुद्धत्वादितिभावः ॥ २७० ॥ २७१ ॥ २७२ ॥ उद्धवकृतपूर्वपक्षस्यपरिहारतयाकृष्णस्यसिद्धांततापिअस्मदुक्तार्थएवस्यात् । नान्यथेत्याह ॥ नित्यमुक्तइति ॥ ऐक्यशंकांकरोतीत्यैक्यशंकाकृत् । सचासाबुद्धवश्चतं । तदेकतां नित्यबद्धनित्यमुक्तयोरेकतां । अतःसिद्धांतपूर्वपक्षयोरेकप्रकारताऽयोगात् । द्वयोर्भावः

द्विता तांनित्यमुक्तनित्यबद्धयोर्भेदमित्यर्थः ॥ २७३ ॥ २७४ ॥ युक्त्यंतरंचाह ॥ एताविति ॥ सुपर्णावेताविन्युत्तरपद्ये एतौ पूर्वोक्तावित्यतिदेशेन । पूर्वं पूर्वश्लोकेपि । अबद्धबद्धयोर्नित्यमुक्तनित्यबद्धयोः । अस्मिन्पद्येनित्यबद्धनित्यमुक्तौविविच्यकथयित्वा एतावित्यस्यैवार्थस्यपूर्वपद्येऽतिदेशात् तत्रापिनित्यबद्धनित्यमुक्तयोर्विभागेनैवप्रस्तुतिरवश्यंवाच्येतिभावः । तत्तस्मात् उक्तनिमित्तात् । कृष्णबद्धवाक् कृष्णोबद्धइतिवाक् ॥ २७५ ॥ ततः सुपर्णावेताविति श्लोकार्थस्यपूर्वप्रस्तुतत्वादेव । एकस्यैव

मुहुःप्रबोधयन्कृष्णःकथंवक्तितदेकतां ॥ अतस्सिद्धांतपद्येस्मिन्द्वितामेववदेत्कृती ॥ २७४ ॥
एतावित्यतिदेशेनपूर्वंचप्रस्तुतिर्द्वयोः ॥ अबद्धबद्धयोर्वाच्यातच्छोच्याकृष्ण(बंध)बद्धवाक् ॥ २७५ ॥
द्वयोरेकस्येतिचार्थस्सुस्थोभूत्ततएवमे ॥ भिन्नांशताच तद्भेदस्यांते(ते)स्वेनैवकीर्तनात् ॥ २७६ ॥
अत्रोक्तोनित्यमुक्तश्चनमेमोक्षोनबंधनं ॥ इत्याहयःपुरायुक्त्यासएवस्यान्नसंशयः ॥ २७७ ॥ ॥

ममांशस्येतिश्लोके द्वयोःखगयोरेकस्य जीवाख्यखगस्येत्यर्थःप्रागुक्तोर्थः । भिन्नांशता ममांशस्येत्यत्रोक्तभिन्नांशता । अंते उत्तरपद्यद्वये । अथबद्धस्यमुक्तस्य सुपर्णावेताविविचपद्यद्वयइत्यर्थः । तेनैव कृष्णेनैव । प्रागंशत्वमुक्त्वा तस्यैवांशस्यांशिनास्वेनसहभेदस्यापिकथनात्भिन्नांशत्वंलभ्यतइतिभावः ॥ २७६ ॥ विद्यामयोयस्सतुनित्यमुक्तइतिसामान्येनोक्तंनित्यमुक्तत्वंकृष्णस्यकथंलभ्यतइत्यतआह ॥ अत्रोक्तइति ॥ अत्रास्मिन्पद्ये । यःपुरा पूर्वश्लोके नमेमोक्षोनबंधनमितिकादाचित्कबंधमोक्षरहिततया

युक्ति- नित्यमुक्ततांमइतिस्वस्याह सचकृष्णएवेति । अत्रापिनित्यमुक्ततयासामान्येनोच्यमानः सएवकृष्णएव । युक्त्या नित्यमुक्तद्व मल्लिका
॥ ४६ ॥ यस्याप्रामाणिकत्वयुक्त्या ॥ २७७ ॥ पूर्वंनवस्तुतइतिबंधस्ययन्मिथ्यात्वमुक्तं तदप्युत्तरश्लोकेमुक्तत्वेनसहोक्तबंधनित्यत्वाख्य शुद्धिसौ०
युक्तिविरुद्धमित्याह ॥ बंधस्येति ॥ तथा बंधसमानयोगक्षेमतया मुक्तेर्नित्यता परस्यापिनबहुकालीनत्वापेक्षया । अतस्तयास
हपठिता बंधस्यनित्यतापि नापेक्षिकी किंतुब्रह्मवत्सार्वकालीनत्वापेक्षयैव । अतःयुक्त्या नित्यस्यमिथ्यात्वासंभवाख्ययुक्त्या त
स्यबंधस्य परोक्तमिथ्यार्थत्वं परेणप्रतिवादिनोक्तमिथ्यार्थत्वं मिथ्यात्वमितियावत् ॥ २७८ ॥ नवस्तुतः नपरमार्थतइत्यर्थः प

बंधस्यनित्यतोक्तिश्चतथामुक्तेश्चनित्यता ॥ पुरापरोक्ततन्मिथ्यार्थत्वंयुक्त्यान्यवारयत् ॥ २७८ ॥
तवापिमुक्तेर्मिथ्यात्वंकथमर्थोभवेद्वद ॥ पदद्वयनिबद्धैकरज्ज्वाप्राप्तिर्द्वयोरपि ॥ २७९ ॥ यादृ
च्छिकस्यपंकस्यक्षालनंचयदृच्छया ॥ वस्तुस्वभावतोनेतिममत्वर्थोनिराकुलः ॥ २८० ॥ यत्प्रा
ङ्नैवमइत्याहतेनसोवास्तवंचतत् ॥ स्वस्मिन्निषेधतीशानेस्वस्यजीवस्यचेत्यपि ॥ २८१ ॥ ॥

रेणापिवक्तुंनशक्यतइत्याह ॥ तवापीति ॥ परमतेपिमुक्तेस्सत्यत्वादितिभावः । पदद्वयेपादयुगेनिबद्धैकरज्ज्वा द्वयोःपादयोः ।
एवंचबंधमुक्तिरूपार्थद्वयसंबद्धेन नवस्तुतइत्यनेनोभयोरपिमिथ्यात्वप्राप्तिर्भवेदितिभावः ॥ २७९ ॥ नवस्तुतःस्वभावतइत्यर्थे
नायंदोषइत्याह ॥ यादृच्छिकस्येति ॥ यादृच्छिकस्य यदृच्छयाधवलवस्त्रेपतितस्य । एवंअस्वाभाविकबंधमोचनमप्यस्वाभा ॥ १८१ ॥
विकमितिभावः ॥ २८० ॥ यद्यस्मा त्प्राक् प्रागुक्तसत्वंरजइतिश्लोकार्धे मेनैवेत्याह तेनकारणेन अवास्तवंच तत् भवबंधनं

ईशानेस्वस्मिन्निषेधति । अतःऔपाधिकबंधमादायापि बद्धोमुक्तइतिश्लोकार्धेजीवएवप्रतिपाद्यो नभगवान् । नैवेत्यवधारणेन
स्वाभाविकस्यवाअस्वाभाविकस्यवाबंधस्यभगवतोऽव्यावर्तनात् । स्वस्य स्वात्मकस्यजीवस्य । स्वतोगुणनिमित्तकबधरहितमपि
ब्रह्म जीवभावंप्राप्यबंधमनुभवतीतियन्मायिनोच्यतेतदपिनेत्यर्थः । येनकेनापिप्रकारेणबंधेंऽगीक्रियमाणेसति मेनैवेतिसावधार
णनिषेधायोगात् । अतःब्रह्मणोत्यंतभिन्नोजीवएवास्वाभाविकबंधाद्याधारतयाप्रतिपाद्यइतिभावः । इतोप्येकस्येत्यत्रऐक्यमर्थो

नेतिब्रवीतिस्वानिष्टंजीवोमच्छक्तितोग्रहीत् ॥ इतिवक्तुंसपद्येस्मिन्प्राहमेगुणतस्त्विति
॥ २८२ ॥ तेनैववक्तिस्वाधीनमनिष्टंस्वस्यनेत्यपि ॥ मोहंचासुरजीवानांसंमुग्धोक्त्याऽक
रोत्प्रभुः ॥ २८३ ॥ स्वातंत्र्यगुणतोबद्धाद्याख्यांव्याख्यांतिमेबुधाः ॥ बंधादिवस्तुतस्तत्त
न्नाम बंधोज्झितस्यमे ॥ नेतिविद्वत्प्रसिद्धिंचसूचयन्शंसतिप्रभुः ॥ २८४ ॥ ॥

नेतिसूचितं । स्वानिष्टं बंधनं । मच्छक्तितः मदधीनगुणसामर्थ्यात् । सकृष्णः । अस्मिन्पद्ये ॥ २८१ ॥ २८२ ॥ तेनैव जीवस्या
निष्टदायकसत्वादिगुणानांस्वाधीनत्वेनैव । स्वाधीनमनिष्टंबंधरूपं । अस्वतंत्रस्यजीवस्यभगवदधीनगुणनिमित्तकदुःखंस्यात् ।
स्वतंत्रस्यदुःखदायकगुणानामपिनियामकस्यकथंतद्दुःखंस्यादितिभावः । नन्वेवंचेन्मदधीनगुणाज्जीवस्यबद्धाद्याख्येतिस्पष्टंकिमि
तिनावादीदित्यतआह ॥ मोहंचेति ॥ २८३ ॥ बद्धोमुक्तइतिश्लोकस्यप्रकारांतरेणव्याख्यानंकरोति ॥ स्वातंत्र्यगुणतइति ॥

युक्ति- स्वातंत्र्यगुणतः जीवनिष्ठबंधादौयद्भगवतस्स्वातंत्र्यं तदाख्यगुणतः मेबुधाः बद्धदुःख्याद्याख्यांव्याख्यांति । तदधीनत्वादर्थंव मल्लिका
दित्यादिसूत्रेषु । बंधवान्बद्धः दुःखवान्दुःखीति बंधादिसंबंधमात्रवाचकाःखल्विमेशब्दाः । तेच जीवेचेद्बंधादिनाऽऽधारा शुद्धिसौ०
॥ ४७ ॥ धेयभावसंबंधंब्रूयुः । परमात्मनिचेत् बंधादिनानियम्यनियामकभावसंबंधंब्रूयुः । यथाराजाजयीत्यत्रभटनिष्ठजयनियामकतया
राज्ञिजयिशब्दप्रयोगः । एवंजीवनिष्ठबंधादिनियामकतयाभगवतिबद्धदुःख्यादिशब्दप्रयोगादितिभावः । बंधादिवस्तुतः
बंधादिवस्त्वाधारतयेतियावत् । तत्तन्नाम बद्धदुःख्यादिनाम नेतिशंसतीतिसंबंधः । ह्याख्येतिमूलस्थितहिशब्दस्यार्थंविद्व

आख्यापदस्यचाख्यानमेवंसत्येवशोभते ॥ मोक्षोबंधनमित्येवनोचेद्रूचेकुतोंततः ॥ २८५ ॥ अस्वतंत्रस्यजीव
स्यबद्धाद्याख्यातुवस्तुतः ॥ इतिसूचयताचात्रमुक्तामुक्तद्विर्तोदिता ॥ २८६ ॥ मायायाअपिमूलंमेस्वातंत्र्या
ख्यगुणोयतः ॥ अतोमायामयोबंधस्तद्ध्वंसोवाकथंमम ॥ इतितत्रैवहेतुंचव्यनक्तीतिमतिर्मम ॥ २८७ ॥ ॥

त्प्रसिद्धिं विदुषांव्यासादीनांप्रसिद्धिंसूचयन् ॥ २८४ ॥ आख्यापदस्यनामधेयपर्यायाख्यापदस्याख्यानंप्रयोगः । बद्धादिनाम वाच्यविचारार्थकत्वे आख्यापदंसार्थकमन्यथाव्यर्थमित्यर्थः । नोचेत् नामविचारोनोचेत् । अर्थाभावकथनएवतात्पर्यचेदित्यर्थः । अंततः बंधादिवस्त्वभावकथनोत्तरार्धे । मोक्षोबंधनमित्येव आख्यापदंविनेत्यर्थः ॥ २८५ ॥ स्वतंत्रस्यमेवस्त्वाधारत्वनिमित्ताख्या नेत्युक्ते अर्थाज्जीवस्यतदाधारत्वनिमित्ताऽऽख्येतिलाभात्सूचयतेत्युक्तं । अत्रपूर्वार्धे । अस्वतंत्रजीवस्यबंधाधारत्वकथनात् स्वतंत्रस्यपरमात्मनःकदापितदभावकथनाच्चेतिभावः ॥ २८६ ॥ यतोमेस्वातंत्र्याख्यगुणः मायायाअपिमूलं नियामक

मित्यर्थः । एवंवदता गुणस्य स्वातंत्र्यगुणस्य मायामूलत्वात्मायानियामकत्वादित्यर्थउक्तोभवति । अतःबंधकमायायाअपिस्वा तंत्र्याख्यमद्गुणाधीनत्वात् । तत्र बंधबंधध्वंसाख्यवस्तुकृतत्वाभावेन वस्तुतइतिपूर्वार्धोक्तार्थेहेतुतयाउत्तरार्धस्यसंबंधइतिभावः ॥ २८७ ॥ ननु स्वस्मिन्बद्धाद्याख्यायास्स्वातंत्र्यनिमित्तकत्वकथनेकोहेतुरित्यतआह ॥ स्वस्यैवेति ॥ वक्ष्यन् विद्यामयोयः सतुनित्यमुक्तइतिवक्ष्यन् श्रुतीरितां सबद्धस्सदुःखीनामानिसर्वाणियमाविशंतीत्यादिश्रुत्युक्तां । अन्वर्था अनुकूलार्था । नित्य मुक्तस्य श्रुत्युक्ताबद्धाद्याख्या कथमित्यतोबंधादिनियामकत्वमादायेत्यनुकूलार्थकथनाय बद्धोमुक्तइतिपद्यमुपोद्घातेनप्रवृत्तमि

स्वस्यैवनित्यमुक्तत्वंवक्ष्यन्नादौश्रुतीरितां ॥ बद्धाद्याख्यामात्मनीत्थमन्वर्थामकरो
द्ध्रुवं ॥ २८८ ॥ भ्रांतत्वेदोषमूलत्वंवदेन्नगुणमूलतां ॥ बद्धाख्यांगुणतश्शंसंस्त
द्धियंत्वगुणोद्भवां ॥ अभिप्रैतिनदोषोत्थांगुणजन्याचधीःप्रमा ॥ २८९ ॥ ॥

तिभावः ॥ २८८ ॥ नवस्तुतइत्यस्यपरोक्तमिथ्यात्वार्थकत्वेदूषणांतरमाह ॥ भ्रांतत्वइति ॥ भ्रांतत्वे बंधस्यभ्रांतिकल्पितत्वे दोषमूलत्वंवदेत् । नतुगुणतइतिगुणमूलतां । बंधस्यगुणमूलत्वेतत्प्रतीतेरपिपरंपरयागुणमूलत्वापरिहारादितिभावः । बद्धाख्यां बद्धइत्याख्यां । तद्धियं बद्धइतिधियं । बंधस्यबद्धाख्यायाश्चगुणमूलत्वेसमानन्यायत्वात्परंपरयातद्बुद्धेरपिगुणमूलत्वमितिभा वः । गुणजन्याचधीःप्रमा । तार्किकरीत्यागुणजन्या अस्माकंतुदोषाभावादिगुणेसत्येवप्रायोजायमानेत्यतःगुणजन्येत्युक्तं

॥ २८९ ॥ इत्थं पूर्वोक्तरीत्याप्रमायाविषयः । श्रुतः प्रमाविषयत्वेनश्रुतः । गुणमूलत्वकथनादर्थात्प्रमाविषयत्वंप्राप्तः । श्रुतौ
तुसाक्षाच्छ्रुतइत्यर्थः । अतःपरोदीरितबंधमिथ्यात्वरूपार्थोनघटतइतिभावः । प्राक्प्रमाजनकगुणपरतयायोजनाकृता । सामा
न्यतःश्रुतगुणपदस्यतत्रापिनेतुंशक्यत्वात् । इदानींगुणपदस्यसत्वादिगुणपरतायामपिबंधस्यप्रमाविषयत्वमानयति ॥ सत्वं
हीति ॥ हिशब्देनसत्वात्संजायतेज्ञानमितिगीतावाक्यंसूचयति । ननुरजस्तमसोस्संशयविपर्ययहेतुत्वात् कथंगुणजन्यत्वेप्रमा
विषयत्वमित्यतआह ॥ **सात्विकाश्चेति** ॥ सुरऋष्याद्युत्तमाधिकारिणः सात्विकाः सत्वगुणप्रधानाः । तत्सत्वगुणप्रधानब्रह्मा

इत्थंप्रमायाविषयःप्रमिनंतीतिचश्रुतौ ॥ श्रुतोबंधःकथंमिथ्यासत्त्वंहिज्ञानदोगुणः ॥ २९० ॥
सात्विकाश्चसुरर्ष्याद्यास्तद्बंधोनभ्रमोद्भवः॥ एवंचतद्वद्दुःखात्माबंधोन्यत्रकथंभ्रमः ॥ २९१ ॥

दिज्ञानविषयत्वा त्सत्वगुणजन्यज्ञानविषयत्वादितियावत् । एवमुक्तप्रकारेण दुःखादिरूपबंधस्यब्रह्मादिप्रमाविषयत्वा त्तद्वत्
ब्रह्मादिबंधवत् । दुःखात्माबंधःअन्यत्रासुरादिष्वपिकथंभ्रमः । भ्राम्यतइतिभ्रमः भ्रमविषयः । उत्तमाधिकारिभिर
नुभूयमानदुःखात्मकबंधस्यसत्वगुणजन्यज्ञानविषयत्वेनप्रमाविषयत्वावश्यंभावात् तत्समानतयासर्वत्रापिविद्यमानोबंधःप्रमा ॥ १८३ ॥
विषयएव । दुःखादिरूपबंधमात्रेतेषामपिधीःप्रमैव । रजस्तमोनिमित्तभ्रमस्तुपरापरतत्वविषयएवेतिभावः ॥ २९१ ॥

एतदेवविशदयति ॥ प्रमातारोपीति ॥ बंधस्यबंधमात्रस्य प्रमातारोपि तेदैत्याः हरिंनप्रमिन्वंति । हरेस्सर्वज्ञत्वसर्वेश्वरत्वादौप्रमावं
तोनभवंति । अतस्तन्निष्ठरजस्तमसोःपरमात्मतत्वप्रमाप्रतिबंधकत्वेनैवोपयोगो नतुतैरनुभूयमानदुःखप्रमांप्रतिप्रतिबंधकत्वेनापीति
भावः । अतः दुःखादिरूपबंधस्यप्रमाविषयत्वनियमात् । अविद्ययाबंधइत्युक्तेपिपरमात्मविद्याभावेनैवबंधइत्यर्थोलभ्यते । नतुमृषा
त्वतइति । सत्वगुणेनभ्रमजनकरजस्तमसोःपराभावेकारितेज्ञानसामान्यसामग्रीतएवप्रमाजायते । तदपेक्षयैवसत्वगुणस्यप्रमाजन
कत्वोक्तिः । नतुसाक्षात्प्रमांप्रत्येवसत्वगुणस्योपयोगः । अतोनप्रामाण्यपरतस्त्वशंका । किंचसुखदुःखादिविषयेसाक्षिणोयाथार्थ्य
नियमात्कदापिनतत्रभ्रांतित्वं । तस्मान्नियमेनप्रमाविषयोदुःखरूपोबंधःकथंमिथ्यार्थस्स्यात् । अतोनवस्तुतइत्यस्यनपरोदीरि

प्रमातारोपिबंधस्यप्रमिन्वंतिनतेहरिं ॥ अतोह्यविद्ययाबंधइत्युक्तं
नमृषात्वतः ॥ इत्थंभागवतेप्रोक्तंकृष्णेनैवोद्धवंप्रति ॥ २९२ ॥

तमिथ्यात्वार्थकत्वं । यद्वा गुणस्यमायामूलत्वात् निर्मायस्यमेगुणतोपितमोयोग्यमोक्षयोग्यजीववत्बद्धोमुक्तइत्याख्यान म
ध्यमजीववत् वस्तुतः स्वरूपभूतसुखदुःखस्वभावतः मेममबंधःगुणतोमोक्षश्चन । अतोहंनित्यमुक्तएव जीवाएवबंधमोक्षपात्री
भूताइत्यर्थः । अथवा गुणस्य मन्निष्ठज्ञानानंदाद्यलौकिकगुणसमुदायस्य मायाऽमूलत्वात् नमूलममूलं मायाप्रकृति रमूलमका
रणंयस्यसतथोक्तः । तस्यभावस्तत्त्वादित्यर्थः । प्रकृत्यजन्यत्वेनाप्राकृतत्वादितियावत् । किंच गुणस्य कृष्णावतारादिषुदुर्जनै
र्मयिप्रतीयमानदुःखमोहादिगुणस्य मायामूलत्वात् निरनिष्टोनिरवद्यइतिश्रुतिबाधितत्वेनभ्रांतिमूलत्वात् । अलौकिकार्थे प्राब

ल्यमागमस्यैवजात्यातेषुत्रिषुस्मृतमितिवचनेनश्रुतेरेवप्रबलत्वात् तद्बाधितप्रतीतेर्भ्रमत्वस्यैवौचित्यादितिभावः । मेगुणतःज्ञा
नादिदिव्यगुणतः बद्धइत्याख्यान । अप्राकृतत्वेनतेषामबंधकत्वादितिभावः । गुणतः भ्रांतप्रतीतदुःखादिगुणतश्च मेबद्धइत्या
ख्यान । तेषांदुर्गुणानांश्रुतिबाधितत्वेनमय्यभावादेवेतिभावः । विद्यमानगुणानामबंधकत्वात् । बंधकत्वेनाभिमतदुर्गुणानां
मय्यभावेनकथंचिदपिममबद्धइत्याख्यानयुक्तेत्युक्तंभवति । किंच मेगुणतःज्ञानादिशुभगुणतःमुक्तइत्याख्यापिन । तेषांगुणा
नांमयिसर्वदाविद्यमानत्वेनतेभ्योमुक्तत्वासंभवात् । गुणापायेऐक्यमितिशंकानिरासार्थमिदं । गुणतः दुःखादिदुर्गुणतश्च मुक्तइ
त्याख्या तद्गुणप्रध्वंसवानित्याख्यान । प्रध्वंसस्यप्रतियोगिसत्तापूर्वकत्वनियमात्प्रतियोगिनश्चमय्यभावात् । अथवा गुणतः
दुःखादिगुणतोपि मुक्तइत्याख्यान । सर्वव्यापिनोममतदंतरपिविद्यमानत्वेनसर्वथातन्मोचनवानित्याख्यानेत्यर्थः । दुःखादिगु
णानांमय्यभावेपिदुःखादिगुणेष्वहंतिष्ठामीतियावत् । एवंच वस्तुतः महदहंकारादिचतुर्विंशतितत्वाख्यवस्तुतः तदुपादानक
देहादिवस्तुतश्च मेबंधनं चतुर्विंशतितत्वमध्येनिविष्टस्यतदुपादानकदेहांतरेषुनिविष्टस्यचतन्निमित्तकजननमरणदुःखादिरूपसंसा
रोममनेत्यर्थः । अत्रापिगुणस्यमायामूलत्वादित्येवहेतुः । मायापदेनप्रकृतिकार्यत्वात्महदादिचतुर्विंशतितत्वानिदेहाश्चकथ्यंते ।
तत्रापिगुणस्य मयिविद्यमानज्ञानानंदादिगुणस्य तदमूलत्वात् तदनुपादानकत्वात् । मयिविद्यमानज्ञानानंदादिगुणानांतदजन्य
त्वेनतन्निमित्तकबंधनवत्त्वंशंकार्हमपिन । तदुपादानकदुःखादीनांचतेषुतेषुजीवेष्वेवविद्यमानत्वेन मयितस्यदुःखादिगुणस्य मा
यामूलत्वात् अनश्नन्नितिश्रुतिमजानतोमायावादिनोभ्रांत्येकमूलत्वात्ममतदुभयवस्तुकृतबंधनंकथंस्यात् । किंतुगुणस्याप्रधान

स्यजीवस्यैव मायामूलत्वात्प्रकृतिमूलत्वात् प्राकृतदेहवत्त्वादितियावत्। बंधनंयुक्तमितिभावः ।किंच वस्तुतः उक्तद्विविधवस्तुतः मोक्षोपिमोचनं तत्परित्यागइतियावत् । मेन। तन्निमित्तकदुःखादेरौपनिषदेमयिप्राप्तुमशक्यत्वेनतद्धीतेरभावात्। श्रौतसर्वव्यापित्वलक्षणायतन्नियामकतयातेषुप्रविश्यैवतिष्ठामीतिभावः। एवंचयेनकेनापिप्रकारेणममबंधबंधध्वंसयोरुभयोरप्यभावेननानादेहेष्वपिवर्तमानोहंनित्यमुक्तएव। जीवस्तुदेहादिनिमित्तकदुःखंवाअस्वातंत्र्यंवाअनुभवन्नित्यबद्धएव ।तस्मा न्नित्यबद्धोनित्यमुक्तएकएवेतिमेमतिरित्युद्धवकृतपूर्वपक्षोनयुक्तइतिपूर्वाध्यायेनसुसंगतोयमर्थः । अथवा मेगुणतःममज्ञानानंदादिगुणतः बद्धोमुक्तइत्याख्यान । मेवस्तुतः ममचतुर्भुजादिदेहवैकुंठादिगेहलक्ष्म्यादिवनिताख्यवस्तुतश्च · मेबंधनंमोक्षश्चन । देहगेहादिवस्तुवा तन्निमित्तसुखाद्यनुभवोवासंसारइतिलोकेदृष्टं । मयितदुभयमपिनसंसारहेतुरितिभावः । तत्रहेतुर्गुणस्यमायामूलत्वादिति । गुणस्यमन्निष्ठज्ञानानंदादिगुणस्य ज्ञानानंदादिगुणात्मकस्यदेहवैकुंठलक्ष्म्याख्यवस्तुनश्च । मायाऽमूलत्वात् मायामूलत्वाभावादित्यर्थः । प्रकृतिमूलदेहगेहादिकंतज्जन्यसुखादिकंचलोकेसंसारइतिप्रसिद्धं । ममगुणावस्तूनिच श्रुतिस्मृतिष्वप्राकृततयाप्रसिद्धाः । अतःकथंतैस्संसारइतिभावः । यद्वा गुणतःसंसारत्वेनाभिमतजीवदेहजन्यानित्यज्ञानसुखादिगुणतः मेबद्धोमुक्तइत्याख्यान । तद्धेतुभूतप्राकृतदेहगेहादिवस्तुतश्चमेबंधनंमोक्षश्चन । अत्रापिहेतुर्गुणस्यमायामूलत्वादिति । गुणस्यानित्यज्ञानानंदादिगुणस्य गुणस्य त्रिगुणात्मकतयागुणपदवाच्यस्यदेहगेहादेश्च मायामूलत्वात्प्रकृतिमूलत्वात् । प्रकृतेश्च मायांव्युदस्यचिच्छक्त्या पुरुषः प्रकृतेःपर इतिभागवतवाक्यान्मत्तोतिदूरत्वात्तदुपादानकप्राकृतगुणदेहादिनिमित्तबंधस्ततोमोक्षश्चममकथंस्यादितिभावः । त

र्हिकस्यबंधमोक्षावित्यत्रेदमेवोत्तरं । गुणस्यज्ञानानंदादिगुणरूपस्य मेभक्तस्ययोग्यजीवस्य मायामूलत्वात् मायाप्रकृतिर्मूलेआ
दौयस्यसः । आदावित्युक्त्या अंतेतद्ध्वंसोप्यस्तीतिध्वनितं । तस्यभावस्तत्त्वंतस्मादित्यर्थः । गुणतःबंधकगुणतः बद्धोमुक्तइत्या
ख्या। वस्तुतः बंधकवस्तुतः बंधनंमोक्षश्च । प्राग्बंधनंपश्चात्तद्ध्वंसश्चभवतीतिनत्रंविहाययोजनीयं । अतःकादाचित्कमुक्तत्वात्
मुक्तावपिमदधीनत्वाख्यसुखरूपबंधबद्धतयानित्यबद्धयोग्यजीवस्यापियदामेनैक्यं तदाकिमुवाच्यंसदानिष्टरूपदुःखबद्धतयामु
क्त्यनर्हयोर्मध्यमाधमजीवयोरैक्यंनेतिपूर्वपक्षोत्तरतयाश्लोकस्यार्थः ॥ २९२ ॥ परोदीरितार्थैतरंगंबाधकंस्वोक्तार्थेसाधकंचोक्त्वा
अजोनुबद्धस्सगुणैर्नवेदत्वांगुणात्परं ॥२९३॥ सत्वंरजस्तमइतिभवंतिप्रकृतेर्गुणाः ॥ एषुहिप्राकृताःप्रोक्ताआब्र
ह्मस्थावरादयः॥२९४॥ भगवन्जीवलोकोयंमोहितस्तवमायया ॥ अहंममेत्यसद्ग्राहोभ्राम्यतेकर्मवर्त्मसु॥२९५॥
इत्यक्रूरेणानिर्णीतःकृष्णोबंधोज्झितःप्रभुः ॥ जीवान्सर्वान्गुणैर्बद्धान्मायाबद्धांश्चशंसता ॥ २९६ ॥ ॥
बहिरंगमपितदाह ॥ अजोनुबद्धइति ॥ अनेन अजोनुबद्धस्सगुणैरजायागुणात्परंवेदनतेस्वरूपमित्यक्रूरस्तुतावुक्तश्लोकार्थसं
गृह्णाति । अत्रहिचतुर्मुखस्यत्रिगुणबद्धत्वं कृष्णस्यत्रिगुणातीतत्वमुच्यते । तदाकिंवाच्यंजीवानांबद्धत्वंपरमात्मनश्चनित्यमुक्तत्वमि
तिभावः । तत्रत्यमेवपद्यांतरंपठति ॥ सत्वमिति ॥ अत्रापिब्रह्मादिस्थावरांतसर्वजीवानांसत्वादिगुणत्रयबद्धतोच्यते । पद्यांतरंपठति
॥ भगवन्निति ॥ अत्रापिगुणमूलमायामोहितत्वंजीवानांकथ्यते । पद्यद्वयस्यापिपरमात्मनस्स्तुतिरूपतयाअर्था त्प्राथमिकश्लोकस ॥ १८५ ॥
माख्ययाचकृष्णस्यतदभावोपिलभ्यते । अतःपद्यत्रयेपिमुक्तामुक्तभेदएवोच्यतइतिभावः । तदेवविशदयति ॥ इत्यक्रूरेणेति ॥

॥ २९३ ॥ २९४ ॥ २९५ ॥ २९६ ॥ वाक्यांतरमप्याह ॥ मयामयइति ॥ अनेन मायामयोयंगुणसंप्रवाहोनविद्यते
तेऽग्रहणानुबंधः इतिवचनंसंगृह्णाति ॥ अस्यार्थः अग्रहणानुबंधः अग्रहणमज्ञानं अनुबध्नातीत्यनुबंधोघटकोयस्यसोग्रह
णानुबंधः । अयं जीवेषुपरिदृश्यमानः ते नविद्यते । अज्ञानमूलबंधश्चसर्वज्ञेत्वयिनविद्यतइतिभावः । हेतुपूर्वकंबंधनिषेधात्सादर

मायामयोयंगुणसंप्रवाहस्ते नविद्यते ॥ इतिशक्रेणकथितंकृष्णंप्रत्येवसादरं ॥ २९७ ॥
प्रागुक्तवाक्यतोपिद्वौमुक्तामुक्तौप्रसाधितौ ॥ २९८ ॥ नचमांतानिकर्माणिनिबध्नंति
धनंजय ॥ उदासीनवदासीनमसक्तंतेषुकर्मसु ॥ २९९ ॥ सत्वंरजस्तमइतिगुणाःप्रकृति
संभवाः ॥ निबध्नंतिमहाबाहोदेहेदेहिनमव्ययं ॥ ३०० ॥ इतिकृष्णेनगीतायांकर्माब
द्धत्वमात्मनः ॥ जीवानांगुणबद्धत्वंचोक्तंवाक्यद्वयेनहि ॥ ३०१ ॥ सोमृतस्याभयस्ये
शोमर्त्यमन्नंयदत्यगात् ॥ परांतकालेसर्वेपिविमुच्यंतेपरामृतात् ॥ ३०२ ॥ ॥

मित्युक्तं ॥ २९७ ॥ प्रागुक्तवाक्यतः सुपर्णावेतावित्यादिप्रागुक्तवाक्यतः ॥ २९८ ॥ गीतावाक्येनापिकृष्णस्यनित्यमुक्ततांजी
वानांबद्धताचसाधयति ॥ नचमामिति ॥ पद्यद्वयस्यफलितमाह ॥ इतीति ॥ २९९ ॥ ३०० ॥ ३०१ ॥ श्रुत्यापिभगवतो
नित्यमुक्तत्वंसाधयति ॥ सोमृतस्येति ॥ अनेनभागवतवचनेनउतामृतत्वस्येशानोयदन्नेनातिरोहति इतिश्रुतिमुपादत्ते । श्रुते

रप्यर्थनिर्णायकत्वात्स्मृत्युदाहरणं। यद्यस्मात् अन्नेनअन्नं। द्वितीयार्थेतृतीया। अन्नपदोदितंमर्त्यं संसारिजीवं अतिरोहतिअत्यगात् अतिक्रम्यवर्तते । तान्स्ववशीकृत्यस्वयंराजवत्तिष्ठतीत्यर्थः । तत्तस्मात् अमृतत्वस्य अमृतस्य । देवान्नभूतामृतव्यावृत्त्यर्थमाह ॥ अभयस्येति ॥ मरणादिसंसारभयरहितस्य मुक्तस्येत्यर्थः । जात्येकवचनमिदं । तथाचमुक्तानामितिलभ्यते । ईशानः स्वामी । संसारिणामीश्वरत्वान्मुक्तानामपीश्वरएव । नहिकोपिप्रेक्षावान्स्वाधीनंस्वसमंकुरुते । अतस्संसारिनियामकत्वान्मुक्तानामपिनियामकत्वमितिसहेतुकंहरेर्मुक्ताधीश्वरत्वमनयाश्रुत्यालभ्यतइतिभावः । श्रुत्यंतरमप्याह ॥ परांतकालइति ॥ अनेन

परामृतपदेनात्रनित्यमुक्तस्स्फुटोदितः ॥ श्रुतयस्स्मृतयश्चैवमुक्तामुक्तद्वितांजगुः ॥ ३०३ ॥
तन्मुकुंदःपरब्रह्मनित्यमुक्तत्वतःप्रभुः ॥ मुक्ताश्चनित्यमुक्तान नित्यमुक्तस्तदापिराट्॥३०४॥
तदधीनत्वबंधेनभक्तिबंधेनवाहरेः ॥ मुक्तोपिबद्धोयत्तस्मान्नित्यबद्धोप्यसौभवेत् ॥ ३०५ ॥
नित्यसंसारिसद्भावोप्यनेनैवप्रसिद्ध्यते ॥ तदायथाश्रुतोवाक्यस्यार्थस्स्वस्थोभविष्यति ॥ ३०६ ॥

तेब्रह्मलोकेतुपरांतकालेपरामृतात्परिमुच्यंतिसर्वेइतिश्रुतिमर्थतोगृह्णाति । तत्तस्मात्श्रुतिस्मृतिभिर्नित्यमुक्ततयाकथनात्। मुक्तत्व नित्यमुक्तत्वाभ्यांमुक्तावपिभेदंसाधयितुमाह॥ मुक्ताश्चेति ॥ मुक्ताश्च मुक्ताएव नतुपरात्मवन्नित्यमुक्ताः । अतस्तदापिमुक्तिदशायामपि । राट्राजा । मुक्तेष्वप्यविद्यमाननित्यमुक्तत्वाख्यमहामहिमवत्त्वादितिभावः ॥ ३०२ ॥ ३०३ ॥ ३०४ ॥ मुक्तौबंधा ॥ १८६ ॥ भावात्कथंजीवानांनित्यबद्धत्वमित्यतआह ॥ तदधीनत्वेति ॥ ३०५ ॥ प्रकारांतरेणजीवस्यनित्यबद्धतामाह ॥ नित्येति ॥

अनेन जीवस्यनित्यबद्धत्वकथनेन । प्रसिद्धबंधेनैवकश्चिन्नित्यबद्धोप्यस्तीतिभावः ॥ ३०६ ॥ एकता नित्यबद्धोनित्यमुक्तएकए वेत्युद्धवेनाशंकितैक्यं । धर्मौ नित्यबद्धत्वनित्यमुक्तत्वाख्यधर्मौसार्वकालिकौ उभयोरपिनित्येतिनित्यत्वकथनादनाद्यनंतकालीनौ ॥ ३०७ ॥ अतः बंधस्यापिनित्यत्वोक्तेः ॥ ३०८ ॥ तर्हिंनवस्तुतइत्यस्यकोर्थइत्यत्रप्रागुक्तमेवार्थंस्मारयन्नुपसंहरति ॥ अना

एवंचनित्यमुक्तस्यनित्यबद्धस्यचैकता ॥ कदास्या त्तौयतोधर्मौविरुद्धौसार्वकालिकौ ॥ ३०७ ॥
अतोमिथ्यात्वकथनेप्याशादेशांतरंगता ॥ ब्रह्मवद्धामोक्षवद्धायन्नित्यंतत्कथंमृषा ॥ ३०८ ॥
अनादिगुणसंबंधात्तेनौपाधिकतैवहि ॥ अवास्तवत्वंप्रागुक्तंनमिथ्यात्वमितिस्थितं ॥ ३०९ ॥
स्वयंदुःखीपरस्यापिदुःखमाकांक्षतेखलः ॥ ब्रह्मसंसरतीत्युक्तमन्यथाकेनहेतुना ॥ ३१० ॥
बद्धस्तुबद्धएवस्याद्राज्ञोबद्धत्वकीर्तनात् ॥ यथामुकुंदबंधोक्त्याबंधनिर्बंधभुग्जनः ॥ ३११ ॥
यद्यबद्धस्सवैबद्धोनित्यमुक्तत्वगीर्वृथा ॥ बंधमिथ्यात्वतस्साचेद्बद्धःकोनामसिद्ध्यति ॥ ३१२ ॥

दीति ॥ तेन नित्यबद्धइतिजीवनिष्ठबंधस्यनित्यत्वकथनेन ॥ ३०९ ॥ नीतिविरुद्धंचभगवतोबद्धत्वकथनमित्याह ॥ स्वयंदुः खीति ॥ अन्यथा पूर्वोक्तखलस्वभावाभावे ॥ ३१० ॥ नीत्यंतरविरोधंचाह ॥ बद्धस्त्विति ॥ बद्धत्वकीर्तनात् निगडबद्धत्व कीर्तनात् ॥ ३११ ॥ अबद्धःसवैबद्धइत्यस्य अबद्धःमुक्तएव समुकुंदःयदिबद्धइतियोजना । शुद्धंब्रह्मैवसंसारबद्धंचेदित्यर्थः ।

सानित्यमुक्तत्वगीः ॥ ३१२ ॥ नीत्यंतरविरुद्धंच ब्रह्मणोबद्धत्वकथनमित्याह ॥ अनुत्तीर्णइति ॥ ३१३ ॥ हरेर्बद्धत्वेतद्दर्श
नादन्यस्यबंधनाशनंनस्यादित्यत्रदृष्टांतमाह ॥ दरिद्रेति ॥ दयादिगुणाभावेशुद्धस्यापितस्यदर्शनंनबंधनाशकमित्यत्रदृष्टांतमाह
॥ धनिनइति ॥ अघृणिनः घृणाकृपाअस्यास्तीतिघृणी घृणीनभवतीत्यघृणी तस्येत्यर्थः ॥ ३१४ ॥ तस्मा द्बद्धस्यनिर्गुणस्यच
दर्शनेनबंधनाशायोगात् । भगवान्दयालुत्वादिगुणवान् । अतःनित्यशुद्धेनभगवतामध्येशुद्धीकरणात् । सःशुद्धीकृतोजीवः

अनुत्तीर्णस्स्वयंपंकात्किमन्योत्तारकोभवेत् ॥ यदिबद्धंपरंब्रह्मकस्स्याद्बंधस्यमोचकः
॥ ३१३ ॥ दरिद्रदर्शनेनस्यान्नैवदारिद्र्यनाशनं ॥ धनिनोऽघृणिनोदूरादाराद्वादर्शने
नकिं ॥ ३१४॥ तस्माच्छुद्धस्सभगवानशुद्धंयोग्यचेतनं ॥ श्रवणादियुतंभक्तंप्रीतश्शु
द्धीकरिष्यति ॥ इतिवाच्यमतश्शुद्धोसोपिशुद्धांतरंभवेत्॥ ३१५॥ यद्यन्यएवमलि
नःपटोधौतपटांतरात् ॥ सधावनेपिधौतोन्यःपटस्स्यात्काभिदातयोः ॥ ३१६ ॥

शुद्धांतरं नित्यशुद्धाद्भगवतःभिन्नंशुद्धं । नतुभगवद्रूपतयाशुद्धं ॥ ३१५ ॥ तत्रयुक्तिमन्यापदेशेनाह ॥ यदीति ॥ प्राङ्मलिनः
यदिस्वमालिन्यदशायांधौतपटांतरादन्यएव तदासपटःधावनेपिक्षालनेपि धौतःशुद्धः । अन्यःप्राक्शुद्धपटात् तयोःप्राक्छुद्धः
पश्चाच्छुद्धपटयोरभिदाअभेदः क्व नक्वापीत्यर्थः । एवंसदाशुद्धस्यहरेःप्रसादान्मध्येशुद्धीकृतोपिजीवश्शुद्धांतरमेवस्यात् । नतुत



दभिन्नइतिदृष्टांतमुखेनफलितायुक्तिरितिद्रष्टव्यं ॥ ३१६ ॥ अतःनित्यमुक्तकादाचित्कमुक्तयोरभेदायोगात् । साधर्म्यं जंननम
रणदुःखाद्यभावेनसमानधर्मतामाह ममसाधर्म्यमागताइतिगीतायां । तर्हिसायुज्यमोक्षेअभेदस्स्यादित्यतआह ॥ पेटीस्थेति ॥ पे
ट्यांपेटिकायांस्थितानेकधौतपटवत्युक्तता सदासंबंधविशेषः ॥३१७॥ अधुनानारायणस्यशबलब्रह्मतांवदंतंप्रति किमिदंशबलत्वंना
म दोषरूपमायाशबलत्वंवा अदोषरूपमायाशबलत्वंवा ज्ञानादिशुभगुणशबलत्वंवेतिविकल्प्याद्यमनंगीकारेणपरिहृत्यद्वितीयतृती

अतस्साधर्म्यमेवाहुर्मुक्तानांहरिरात्मना ॥ पेटीस्थानेकपटवत्सायुज्यमपियुक्तता ॥ ३१७ ॥ किंचेदंशबल
त्वंतेकिंमायाशबलत्वतः ॥ उतसर्वेश्वरत्वादिसद्गुणांभोधिसंभ्रमात् ॥ ३१८ ॥ मायादूरत्ववाक्यानिपूर्वे
धिक्कुर्वतेमतं ॥ नित्यमुक्तत्वसिद्ध्यर्थंप्रागुक्तवचनानिच ॥ ३१९ ॥ अज्ञानेजीवगत्वस्यैवोक्तत्वाचनतन्मतं
॥ ३२० ॥ हरेरिच्छापिमायाख्यामायाख्याप्रकृतिर्जडा ॥ भ्रमहेतुश्भ्रमायैकामायेयंत्रिविधामता ॥ ३२१ ॥

यौदोषानापादकतयांगीकरोति ॥ किंचेत्यादिना ॥ ३१८ ॥ मायादूरत्ववाक्यानि मायांव्युदस्यचिच्छत्त्येत्यादिवाक्यानि ।
प्रागुक्तवचनानि सत्वंरजस्तमइतिगुणाजीवस्यनैवमइत्यादिवचनानि ॥ ३१९ ॥ अज्ञानेजीवगतत्वस्य अज्ञानंजीवाश्रितमित्य
स्यार्थस्येत्यर्थः । उक्तत्वात् अहमज्ञइतिप्रत्यक्षेण निवर्त्यनिवर्तकयोस्समानदेशत्वनियमादितियुक्त्या अनादिमायायासुप्तोयदा
जीवःप्रबुध्यतेइत्यादिश्रुत्याचसमर्थितत्वात् । तन्मतं हरेर्दोषरूपमायाशबलत्वमतं ॥ ३२० ॥ ननुतर्हिसैषाभगवतोमायेत्यादि

वाक्यानांकागतिरित्यतोमायांविभज्यदर्शयति ॥ हरेरिति ॥ येयंपंचविधामाया तत्रइच्छाशक्तितेजोरूपदोषानापादकमायामा दाय इंद्रोमायाभिःपुरुरूपईयतेइत्यादिवाक्यानिप्रवृत्तानि । अन्यथामायाभिरितिबहुवचनंव्यर्थंस्यात् । अतश्श्रुत्यापिदोषानापा दकमायात्रित्वंसूचितमितिद्रष्टव्यं ॥ ३२१ ॥ इच्छायामायाशब्दवाच्यत्वेप्रमाणमाह ॥ महामायेति ॥ स्वच्छंदोपात्तदेहाय तस्येच्छयात्तवपुषः मायामनुजईश्वर इत्यादिभागवतवाक्यानामैकार्थ्यलाभायापिमायेच्छाशब्दौपर्यायावितिगम्यते । मायाशब्द

हरेश्शक्तिश्चतेजश्चतथामायापदोदिते ॥ महामायेत्यविद्येतिनियतिर्मोहिनीतिच ॥
प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यते ॥ ३२२ ॥ इत्थंपुराणवचनंतथाभागवतेध्रुवः ॥
मायाख्ययास्वशक्त्येतिमायाख्यांशक्तिमाहहि ॥ ३२३ ॥ अंतस्स्थस्सर्वभूतानामा
त्मायोगेश्वरोहरिः ॥ स्वमाययावृणोद्गर्भंवैराट्याःकुरुतंतवे ॥ ३२४ ॥ ॥

स्यभगवच्छक्तिवाचकत्वेप्रमाणमाह ॥ तथेति ॥ मायाख्ययास्वशक्त्येत्यनेन एकस्त्वमेवभगवानिदमात्मशक्त्यामायाख्ययो रुगुणयामहदाद्यशेषमितिवचनंसंगृह्णाति । अत्रमायेत्याख्यानामयस्यास्तयास्वशक्त्येत्यनेनेश्वरशक्तेर्मायाशब्दवाच्यत्वंस्पष्टमुक्त मितिद्रष्टव्यं ॥ ३२२ ॥ ३२३ ॥ मायाशब्दस्यभगवत्तेजोवाचकत्वेप्रमाणमाह ॥ अंतःस्थइत्यादिना ॥ मायेत्युक्त्वा पूर्वपद्ये स्वमाययेतिमायापदेनोक्त्वा वैष्णवंतेजआसाद्येतिद्वितीयपद्येवैष्णवंतेजइत्याहेतिसंबंधः । सा तेजोरूपामाया स्वमायाकिल ।

स्वमाययावृणोद्गर्भमित्यत्रस्वमायापदेनकथनात् । स्वरूपभूताहिमायास्वमाया । इच्छादिरूपमायाविवक्षायास्वमाया स्वयोगमा येत्येवप्रायशःप्रयोगः । अन्यमायाविवक्षायांतु मायांव्युदस्यचिच्छक्त्येत्यादौसामान्यतएवप्रयोगः । अतःप्रयोगवैलक्षण्येनापिमा याद्वैविध्यमूह्यतइतिभावः ॥ ३२४ ॥ ३२५ ॥ ३२६ ॥ इच्छादिरूपमायामादायक्वचित्पुराणादौहरेर्मायामयत्वोक्तिरपिमाहा त्म्यसाधिकेत्युपपादयति ॥ इच्छादिरूपेति ॥ अयंभगवान् । तेनेच्छादिरूपमायामयत्वेनमालिन्यंनहि । एतदुपपादयति ॥

यद्यप्यस्त्रंब्रह्मशिरस्त्वमोघंचाप्रतिक्रियं ॥ वैष्णवंतेजआसाद्यसमशाम्यद्भृगूद्वह ॥ ३२५ ॥
इतिभागवतेसूतोमायेत्युक्त्वापुनश्चतां ॥ वैष्णवंतेजइत्याहस्वमायाकिलसाहरेः ॥ ३२६ ॥
इच्छादिरूपायामायातयामायामयोस्त्वयं ॥ स्वच्छंदवृत्तितासर्वशक्तताचसमर्थता ॥ ३२७ ॥
सिद्ध्येन्महात्मनस्तेनमालिन्यंनहिकिंचन ॥ प्राचुर्यार्थोमयट्शब्दोवक्तितैःपूर्णतांकिल ॥ ३२८ ॥
अनेकार्थपदस्यार्थोग्राह्यःप्रकरणोचितः ॥ नहिसैंधवशब्देनवक्त्यश्वंभुक्तिकामुकः ॥ ३२९ ॥

प्राचुर्यार्थइति ॥ तैरिच्छाशक्तितेजोभिः । पूर्णेच्छावत्त्व पूर्णशक्तित्व पूर्णतेजस्त्वरूपमहिमापादकएव । मयटोविकारार्थत्वे कथंचिन्मालिन्यंस्यात् । तच्च विकारशब्दान्नेतिचेन्नप्राचुर्यादितिसूत्रेणनिराकृतं । प्राचुर्यार्थत्वेउक्तरीत्यामहिमैव नमालिन्यमि तिभावः ॥ ३२७ ॥ ३२८ ॥ मायामयेतिशब्दस्यभगवतिप्रयोगेदोषरूपमायायाअपिसंग्रहःकुतोनेत्यतआह ॥ अनेकार्थइति ॥

प्रकरणोचितः शुभप्रकरणेशुभार्थत्वं अशुभप्रकरणेअशुभार्थत्वमितिप्रकरणोचितइत्यर्थः ॥ ३२९ ॥ दोषरूपमायापिद्विविधा भ्रमकरीप्रकृतिरूपाचेति । तत्राद्यैवभगवत्यत्यंतानुपपन्ना । द्वितीयांतुइच्छादिवत्स्वनिष्ठांनकरोति । किंतुकुंभकारोमृदमिव सृष्टिकालेतामुपादानीकृत्यजगत्सृजति । अन्यदातस्यामप्युदास्तइत्याह ॥ **मायांतुप्रकृतिंविंद्यादिति** ॥ ३३० ॥ मायाख्यांप्र

**मायांतुप्रकृतिंविंद्यान्मायिनंतुमहेश्वरं ॥ इतिश्रुतौतुयामायेत्युक्तासाप्रकृतिर्जडा ॥ ३३० ॥**
**सर्गादौमाययाविश्वंसृजतीतिवचोपिच ॥ मायाख्यांप्रकृतिंप्राहयास्योपादानकारणं ॥ ३३१ ॥**
**जगतोहेतुभूतातुमायासर्वगताशुभा ॥ विकृताकारतोऽनित्यानित्यामूलस्वरूपतः ॥ ३३२ ॥**
**नसाभ्रांतिकरीशुद्धामुक्तामुक्तप्रदेशगा ॥ सूक्ष्मरेणुमयी साचतंतुवायस्यतंतुवत् ॥ ३३३ ॥**
**वशगायस्यदेवस्यतयासशबलःकथं ॥ नहिस्वर्णकृतोहस्तस्सौवर्णश्शबलोपिवा ॥ ३३४ ॥**
**नापितंतुमयीतंतुवायमूर्तिरतःप्रभुः ॥ अप्राकृतमहाकायोयद्रोम्णिप्राकृतंजगत् ॥ ३३५ ॥**

कृतिंप्राह । नत्वनिर्वचनीयाविद्याख्यांपराभिमतांभ्रमकरींमायां ॥ ३३१ ॥ विकृताकारतः अनित्येतिच्छेदः ॥ ३३२ ॥ सा भ्रांतिकरी जीवनयनपिधानरूपमायावत्भ्रांतिकरीन । अतएवशुद्धा । अतएवमुक्तामुक्तप्रदेशगाच । प्रकृतेस्सर्वव्यापित्वादितिभावः । तस्यास्स्वरूपमाह ॥ **सूक्ष्मरेणुमयीति** ॥ तार्किकाभिमतपरमाणुतोप्यनंतगुणितसूक्ष्मरेणुमयी । वशगा नतुतन्निष्ठत्वेनतस्यप्राकृतत्वापादिका । तयातटस्थयाप्रकृत्या सःपरमात्मा । तत्रदृष्टांतमाह ॥ **नहीति** ॥ अतःप्रकृतेर्भगवन्मूर्त्याकारेणापरिणामात् ॥३३३॥३३४॥३३५॥ एतादृशप्रकृतेरेवजगत्कारणत्वेभगवतस्तदमिश्रितत्वेच गीतावाक्यद्वयंप्रमाणीकरोति॥**भूमिराप इति** ॥ मे मदधीनाप्रकृतिः पृथिव्याद्यष्टकार्यरूपेणभिन्नाविभक्ता । तथाचेदंजग त्प्रकृत्युपादानकमेव नतुपराभिप्रेताविद्योपादानकमितिभावः ॥३३६॥ अध्यक्षेणस्वामिना नतुतच्छबलितेन । अतःप्राक्मेप्रकृतिरित्यपिस्वस्यप्रकृतिस्वामित्वादेवोक्तमितिभावः ।



**भूमिरापोऽनलोवायुःखंमनोबुद्धिरेवच ॥ अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा ॥ ३३६ ॥**
**मयाध्यक्षेणप्रकृतिस्सूयतेसचराचरं ॥ हेतुनानेनकौंतेयजगद्विपरिवर्तते ॥ इतिकृष्णस्स्वयंप्राहप्रकृत्यध्यक्षतांपरं ॥ ३३७ ॥ निमित्तमात्रंतत्रात्मानिर्गुणःपुरुषर्षभः ॥ व्यक्ताव्यक्तमिदंविश्वंयत्रभ्रमतिलोहवत् ॥ इतिवाक्येनिमित्तत्वमात्रोक्तेश्चनतन्मयः ॥ ३३८ ॥**

सूयते सूतइत्यर्थः । कार्याकारेणस्वस्याएवविकृतत्वात्सूयतइत्युक्तं । विपरिवर्तते विशेषेणपरिवर्तते अनाद्यनंतकालेषुचक्रवत्परिभ्रमतीत्यर्थः । परंकेवलं । एवंभगवतास्वस्यप्रकृत्यध्यक्षत्वस्यैवोक्तत्वान्नप्रकृतिरूपमायामादायमायाशबलितत्वं ॥ ३३७ ॥ अस्मिन्नर्थेभागवतवाक्यंपठति॥ **निमित्तमात्रमिति** ॥ वाक्यस्यतात्पर्यमाह॥ **इतिवाक्यइति** ॥ वाक्येभागवतवाक्ये । तन्मयः प्रकृतिशबलितः । जगदुपादानत्वेहितन्मयत्वं । तदेवनसंभवति । कूटस्थस्यजगदाकारेणपरिणामायोगात् । जगदुपादानभूतमायाश

युक्ति- ॥ ५५ ॥

बलितत्वंचनवक्तव्यं । निमित्तमात्रं नतूपादानमित्युपादानत्वस्यव्यवच्छेदार्थस्तच्छबलितत्वांगीकारइतिभावः ॥३३८॥ साप्रकृतिः । निर्गतागुणायस्मात्सहिनिर्गुणः । गुणमय्याःप्रकृतेःनिर्गमनाभावेकथंकेवलंगुणानामेवनिर्गमनं । नहिपटंविहायपटरूपमात्रंनिर्गच्छति । अतोनिर्गुणत्वोक्त्याप्रकृतिदूरतापिसिद्ध्यतीतिभावः । भ्राम्यमाणलोहस्योक्तत्वात् स्थलांतरेग्राव्णेनमस्तेगुणकर्मसाक्षिणइतिस्पष्टमुक्तत्वाच्च तन्निमित्तायस्कांतोप्यर्थादुक्तएव । अतः अयस्कांतदृष्टांतोपीत्युक्तं । असक्तस्य कांस्यपात्रस्थलोहभ्रमणहेतुभूतदूरस्थायस्कांतवत् असक्तस्य प्रकृत्यादिलेपरहितस्य । यद्यप्ययस्कांतवत् नब्रह्मणोदूरस्थता व्याप्तत्वात् तथा

निर्गुणत्वोक्तितश्चाभूत्सादूरेत्रिगुणात्मिका ॥ आहायस्कांतदृष्टांतोप्यसक्तस्यनियंतृतां ॥ ३३९ ॥
तमसःपारगत्वंचश्रुत्यास्मृत्याचकीर्त्यते ॥ अतोजगदुपादानमायाशबलता गता ॥ ३४० ॥ विदि
तोसिभवान्साक्षात्पुरुषःप्रकृतेःपरः ॥ केवलानुभवानंदस्वरूपस्सर्वबुद्धिदृक् ॥ ३४१ ॥ ॥

पितत्कृतलेपाभावात्तत्स्थोपिदूरस्थएवेतिभावेनोक्तमसक्तस्येति । तदुक्तंगीतायां । मयाततमिदंविश्वंजगदव्यक्तमूर्तिना । मत्स्थानिसर्वभूतानिनचाहंतेष्ववस्थितः । नचमत्स्थानिभूतानिपश्यमेयोगमैश्वरमिति । नियंतृतां व्यक्ताव्यक्तमिदंविश्वमित्यत्रव्यक्तपदोदितमहदादिकार्याणा मव्यक्तपदोदितप्रकृतेश्चनियंतृतां । अतःकेनापिप्रकारेणनभगवतःप्रकृतिशबलत्वमितिभावः॥३३९॥ श्रुत्यादिकमप्यस्मिन्नर्थेदर्शयन्नुपसंहरति ॥ तमसःपारगत्वमिति ॥ श्रुत्या वेदाहमेतंपुरुषंमहांतमादित्यवर्णंतमसःपरस्तादित्यादिकया । स्मृत्या तमस्तदासीद्गहनंगभीरंयस्तस्यपारेऽभिविराजतेविभुरित्यादिकया ॥ ३४० ॥ इदानींभागवतश्लोकेन भ

मल्लिका शुद्धिसौ०

॥ १९० ॥

गवतोदेहस्यापिमायाख्यप्रकृतिशबलत्वंनास्तीत्युपपादयति ॥ विदितोसीति ॥ ३४१ ॥ ३४२ ॥ स्वदृष्टं स्वेनवसुदेवेनदृष्टं। इत्थं प्रकृतेःपरत्वेन केवलानुभवानंदस्वरूपत्वेनच ॥ ३४३ ॥ अतः प्रकृतिपरत्वमुक्त्वा चतुर्भुजस्यतस्यकेवलानुभवानंदस्वरूप त्वेनवर्णितत्वात्। केवलानुभवानंदइत्यत्रोक्तकेवलपदस्यार्थमाह ॥ जडामिश्रइति ॥ स्वरूपपदेनहस्तपादाद्याकारशरीरमेवो च्यते। स्वरूपमात्रपरत्वेदृश्यमानाकारस्यप्राकृतत्वापातेनप्रकृतेःपरत्वरूपविशेषणस्यासंबद्धत्वापातात्। स्वरूपमात्रेप्रकृतिपरत्व

इतिभागवतेकृष्णःप्रकृतेःपरएवसन् ॥ केवलानुभवानंदरूपस्स्पष्टंनिरूपितः ॥ ३४२ ॥
स्वदृष्टमद्भुतंरूपंशिशोस्तस्यचतुर्भुजं ॥ इत्थमस्तौत्किलपितादीप्तश्रीवत्सकौस्तुभं
॥ ३४३ ॥ अतोप्राकृतएवाभूद्दिव्याकारोहरेरसौ ॥ जडामिश्रसुखज्ञानात्मकहस्तांघ्र्यु
रोमुखः॥ ३४४॥ भ्रमहेतुस्तुयामायाजीवेजीवेचसंगता ॥ सानैवश्रूयतेदेवेयाजीवेपिनमु
क्तिगे ॥ ३४५ ॥ किंपुनर्नित्यमुक्तेस्मिन्जडमायानुपद्रवः ॥ ३४६ ॥ ॥

स्यजीवमात्रेपिसद्भावात्। अतस्स्वदृष्टभगवन्मूर्तेरेवेयंप्रशंसा ॥ ३४४ ॥ एवंचजगदुपादानभूतमायाशबलत्वाभावेभ्रमहेतुभूत मायाशबलत्वाभावःकिमुवाच्यइतिभावेनाह ॥ भ्रमहेतुरिति ॥ सामाया। याभ्रमकरीमायामुक्तिगेजीवेपिन सेतिसंबंधः ॥ ३४५ ॥ प्रकारांतरेणकैमुत्यमाह ॥ किंपुनरिति॥ भ्रमकरतयाऽतिक्रूरमायायाःभगवद्बाधनाऽसमर्थत्वे शांतायाजगदुपादा

युक्ति- नभूतमायायास्तद्बाधासामर्थ्यंकिंवाच्यमितिभावः । देहादिरूपमायायाभ्रमकरमाया मूलं । तदभावेअस्याअप्यभावःसुस्थइत्य मल्लिका
॥ ५६ ॥ पिद्रष्टव्यं ॥ ३४६ ॥ भगवतोमायादूरत्वेस्पष्टानिभागवतवाक्यान्याह ॥ विलज्जमानयेत्यादिना ॥ अमुया प्राक्प्रस्तुतया शुद्धिसौ०

विलज्जमानयायस्यस्थातुमीक्षापथेऽमुया ॥ विमोहिताविकत्थंतेममाहमितिदुर्धियः ॥ ३४७ ॥
नमस्तुभ्यंभगवतेब्रह्मणेपरमात्मने ॥ नयत्रश्रूयतेमायालोकदृष्टिविकल्पना ॥ ३४८ ॥ त्वमा
द्यःपुरुषस्साक्षादीश्वरःप्रकृतेःपरः ॥ मायांव्युदस्यचिच्छक्त्याकैवल्येस्थितआत्मनि ॥ ३४९ ॥
सएवजीवलोकस्यमायामोहितचेतसः ॥ विधित्सुस्खेनवीर्येणश्रेयोधर्मादिलक्षणं ॥ ३५० ॥
इतिभागवतेप्रोक्तचतुर्मुखमुखोक्तितः ॥ कृष्णस्यबंधकीभूतमायादूरत्वनिर्णयात् ॥ ३५१ ॥
नयत्रमायेत्याद्युक्त्यायल्लोकोपिनमायिकः ॥ कथंमायामयाकारस्तल्लोकेशोभवेद्वद ॥ ३५२ ॥
मायाजयाकृतिश्शांतिरितिरूपचतुष्टयं ॥ श्रियोस्तियाहरेर्जायावासुदेवादिरूपिणः ॥ ३५३ ॥

मायया लोकदृष्टिविकल्पना लोकानांजीवानांदृष्टिंविकल्पयतिभ्रमयतीतिलोकदृष्टिविकल्पना ॥ ३४७ ॥ ३४८ ॥ ३४९ ॥
॥ ३५० ॥ ३५१ ॥ भगवतःअमायिकदेहवत्त्वेयुक्त्यंतरमाह ॥ नयत्रेति ॥ नयत्रमायेत्याद्युक्त्या नयत्रमायाकिमुतापरेहरेर ॥ १९१ ॥
नुव्रतायत्रसुरासुरार्चिताइत्युक्त्या । यल्लोकः यस्यकृष्णस्यलोकः । तल्लोकेशः अमायिकवैकुंठेशः ॥ ३५२ ॥ महालक्ष्म्याअपि

मायाशब्दवाच्यत्वस्यपुराणादौप्रसिद्धत्वात् सैवमाया नतुत्वदीयानिर्वाच्याविद्येत्याह ॥ मायेति ॥ माया वासुदेवस्यपत्नी
जयासंकर्षणस्य कृतिःप्रद्युम्नस्य शांतिरनिरुद्धस्य । तदेवस्पष्टयति ॥ वासुदेवादिरूपिणइति ॥ ३५३ ॥ नामधेयानीति
दशमस्कंधेमहालक्ष्मींप्रतिविष्णोर्वचनं । कानिनामधेयानीत्यतआह ॥ मायानारायणीत्यादि ॥ इतिप्रभाष्येति तत्रैवदुर्गा
रूपमहालक्ष्मीवचनं । स्थानानिचनराभुवीतिदेवालयस्याप्युक्तत्वात् दुर्गैवेयंदेवी नतुपराभिलषिताविद्या । तथात्वेउत्तरप्रत्युत्तरा

नामधेयानिकुर्वंतिस्थानानिचनराभुवि ॥ मायानारायणीशानाशारदेत्यंबिकेतिच
॥ ३५४ ॥ इतिप्रभाष्यतंदेवीमायाभगवतीभुवि ॥ बहुनामनिकेतेषुबहुनामाबभू
वह ॥ इतिभागवतोक्त्याचमायादुर्गात्मिकारमा ॥ ३५५ ॥ याकैंकर्यकरीतस्यसर्व
दासहचारिणी ॥ तयैवमायीसजगन्निर्ममेमाययातया ॥ ३५६ ॥ योनःपिताविष्णुर
सौलोकमाताहिसेंदिरा ॥ तस्मात्स्वरूपमायेच्छाबाह्ये श्रीप्रकृती वचो ॥ ३५७ ॥

योगात् । तयैव लक्ष्मीरूपमाययैव मायालक्ष्मीःअस्यवर्ततइतिमायी लक्ष्मीधरइत्यर्थः । तयामाययालक्ष्म्याख्यमायया । अतोमा
यानिर्मितत्वेपिनजगतोमिथ्यात्वं ॥३५४॥३५५॥३५६॥ लक्ष्मीरूपमायायाएवजगत्कारणत्वेयुक्त्यंतरमाह ॥ योनइति ॥ योनः
पिताजनितायोविधातेत्यादिश्रुत्या नोस्माकंपिता असौविष्णुरित्यावृत्त्यायोजनीयं । सेंदिरालोकमाताहि । इंदिरालोकमातामे

युक्ति- त्यभिधानप्रसिद्धिं हिशब्देनसूचयति । एवंचविष्णुर्मायया जगन्निर्ममइत्युक्ते विष्णोःपितृत्वेन मायालक्ष्मीरेवभवेत् । पिताहिप मल्लिका
॥ ५७ ॥ त्न्यापुत्रंजनयति । नत्वन्येन । अतोमायापदेनसृष्टिसमयेलक्ष्म्याएवग्रहणंयुक्तयंतरमेतत् । उक्तमुपसंहरति ॥ तस्मादिति ॥ शुद्धिसौ०
इच्छेत्युपलक्षणं । शक्तितेजसीअपिग्राह्ये । बाह्ये विष्णुस्वरूपाद्बाह्ये भिन्नेइत्यर्थः । मायेश्रीश्चप्रकृतिश्चश्रीप्रकृती वशे विष्णो
र्वशे । अभिमन्यमाना जडमाया अभिमानिनीमायाश्रीरितिविवेकः । तत्रश्रियस्सर्वदाहरिणासहवासेपिनकाचिदस्माकंहानिः ।
अन्यस्यास्सृष्टिसमयेउपादानतयातत्समीपवासेपिनतस्यतयाशबलत्वं ॥ ३५७ ॥ चतुर्थीं नयनपिधानभूतां भ्रमदांभ्रमकरीं

चतुर्थींतुचतुर्थार्थीनस्मरेद्भ्रमदांहरौ ॥ ३५८ ॥ विज्ञानास्त्रेणयोमायामहरद्बाणमं
त्रिणः ॥ अन्यैरहन्यमानांचसाकथंसात्वतर्षभे ॥ ३५९ ॥ मयमायाहिसासत्या
न्मिथ्यार्थान्दर्शयेत्परं ॥ त्रिविधादेवमायेयंसत्यासत्यार्थकारिणी ॥ ३६० ॥

हरौनस्मरेत् । हरिनयनेवाहरिसमीपेवातिष्ठतीति सृष्टिकालेवाऽन्यदावा नस्मरेत् । किंतुअनाद्यनंतकालेषुजीवेष्वेवसातिष्ठति ।
अतस्स्वरूपेच्छादिरूपमायात्रयातिरिक्तबाह्यमायात्रयेणापिनविष्णोश्शबलत्वं । परोदीरितमायातुसप्तमरसायिता । तयाशबलत्व
वार्तापिनोचितेतिभावः ॥ ३५८ ॥ लौकिकमायांतरंवदन्तन्निराकरणसमर्थस्यभगवतोमायांतरनिराकरणमपिसमानन्यायत्वात् ॥ १९२ ॥
सिद्ध्यतीत्याशयेनाह ॥ विज्ञानास्त्रेणेति ॥ साबाणमंत्रिणोमाया अन्यावा ॥ ३५९ ॥ मयमायाहि मयेनदैत्यकारुणानिर्मिता

मयमाया । सत्या मंत्रौषधादिरूपत्वात् । मिथ्यार्थान्पर्वतादीन् । त्रिविधा स्वरूपेत्रिविधा बहिश्चत्रिविधा । देवस्यविष्णोस्स्व
रूपभूतातदधीनाच स्वयंसत्या सत्यार्थकारिणीच । दैत्यमायाभ्रमकरीमायाचअसत्यार्थदर्शिनीत्यपिद्रष्टव्यं । सत्यार्थकरणा
शक्तःऐंद्रजालिकादिर्नरतुरगादिमिथ्यार्थान्दर्शयेत् । शक्तस्तुराजानतथा किंतुसत्यानेवगजतुरगादीन्संपादयति । एवंसप्तमाया
अपिसत्याएवजाताः ॥ ३६० ॥ मिथ्याभूतमायांतुनकुत्रापिपश्यामइत्याह ॥ तवत्विति ॥ ३६१ ॥ तवमायावादिनउपमा ।

तवत्वनिर्वाच्यमायानसुरेनापिचासुरे ॥ ३६१ ॥ मदांधेतुमहादैत्येगुरोरप्यवमंतरि ॥
तवोपमाकथंचित्स्यान्मिथ्यात्वंनास्तितायदि ॥ ३६२ ॥ गुरुंचगुरुणादत्तांविद्यामुद्यत
धीरसौ ॥ यतोधिक्कुरुतेवाचासआचार्योभवेत्तव ॥ ३६३ ॥ अनिर्वाच्यत्वपक्षस्यत्वनि
र्वाच्योपरोगुरुः ॥ प्रच्छन्नबौद्धराद्धांतोयत्त्वंसदसतोर्बहिः ॥ ३६४ ॥ ॥

कथंचिदित्यनेनतत्रापिमायायाःवस्तुगत्याननास्तिता । किंतुवाङ्मात्रेणेतिसूचयति । नास्तिता असत्त्वं । नत्वनिर्वाच्यत्वं॥३६२॥
तदेवदर्शयति ॥ गुरुंचेति ॥ धिक्कुरुते नास्तीतिवदति तवसआचार्यः । गुरुदत्तमायाख्यविद्यायानास्तीतिवादित्वात् ॥ ३६३ ॥
अनिर्वाच्यमायापक्षस्य गुरुरनिर्वाच्यःवक्तुमशक्यः । त्रैलोक्येपिनास्तीत्यर्थः । तत्रहेतुमाह ॥ प्रच्छन्नेति ॥ यद्यस्मात् । सद
सतोः सतोवैदिका दसतःपाषंडिनश्चबहिः । प्रच्छन्नःबौद्धराद्धांतोयस्मिन्सतथोक्तः । केवलंपाषंडीन तद्राद्धांतस्याच्छादनात् ।

वैदिकचिह्नवानपिवैदिकोपिन । अंततःबौद्धराद्धांताश्रयणात् । अतःवैदिकोपिनतेगुरुः नापिपाषंडीतिभावः । सदसतोर्बहिरि त्यनेनउक्तरीत्यातवैवसदसद्विलक्षणत्वात्त्वन्मतस्यत्वमेवगुरुः । स्वकपोलकल्पितप्रमेयांगीकारीतिचसूचयति ॥ ३६४ ॥ अन्यः पक्षः ज्ञानानंदादिशुभगुणभरितत्वेनशबलब्रह्मतापक्षः । हास्याय शुभगुणभरितत्वेनहैन्यापादकशबलत्ववादीसभामध्येहास्योसी तिभावः ॥ ३६५ ॥ तदेवदृष्टांतमुखेनोपपादयति ॥ **मलिनेति** ॥ मलिनद्रव्यसंयोगे पंकादिमलिनद्रव्यसंयोगे शुद्धवस्तुसमा योगे कौसुंभरसादिश्लाघ्यवस्तुसमायोगे । स्वर्गिणांदेवानां तादृशवस्त्रादिनाऽलंकारेप्रीतिदर्शनादितिभावः ॥ ३६६ ॥ शुद्धव

**पक्षोन्यस्तुसभामध्येहास्यायस्यात्परंनृणां ॥ ३६५ ॥ मलिनद्रव्यसंयोगेमालिन्यंवाससोपिहि ॥**
**शुद्धवस्तुसमायोगेश्लाघ्यंस्यात्स्वर्गिणामपि ॥ ३६६ ॥ किंनकौसुंभकुसुमरक्तिमावस्त्रभूषणं ॥**
**नकिंकुंकुमसौगंध्यंगंधसौगंध्यवर्धनं ॥ ३६७ ॥ शौक्ल्योत्तेजकयोगेस्याद्वस्त्रस्यह्यतिशुक्लता ॥३६८॥**

स्तुसमायोगेनश्लाघ्यतायामुदाहरणद्वयमाह ॥ **किंनेत्यादिना** ॥ वस्त्रभूषणंकिंनेतिसंबंधः । कुंकुमेनसौगंध्यंकुंकुमसौगंध्यं कुंकुमसुगंधयुक्तत्वमित्यर्थः । पाटलवर्णस्याप्युपलक्षणमेतत् । गंधस्यसौगंध्यंसुगंधत्वं कौसुंभरसमिलितवस्त्रं कुंकुमरसोपेतचं दनादिकंच राजादिभिरपिश्लाघ्यमेवदृष्टं । अतश्शुभगुणसमुदायैर्ब्रह्मणस्सर्वजनश्लाघ्यतैवस्यात् । नतुदूष्यत्वमितिभावः ॥ ३६७ ॥ तदेवपुनर्दृष्टांतांतरमुखेनदर्शयति ॥ **शौक्ल्येति** ॥ शौक्ल्योत्तेजकयोगे रजकादिभिःक्रियमाणे ॥ ३६८ ॥ ज्ञाना



दिगुणानामज्ञानादिदोषनिवारकत्वेनापिश्लाघ्यत्वमित्याह ॥ **ज्ञानेनेति** ॥ आदिपदेन संशयविपर्ययनिद्रापशब्दादिदोषागृह्यंते ॥३६९॥ स्वरूपज्ञानमज्ञानाविरोधीतिपक्षंदूषयति ॥ **यदीति** ॥ मुक्तस्यसंसारान्मुक्तस्य अज्ञाना त्स्वरूपज्ञानस्याज्ञानाविरोधित्वेवि रोधिभूतबाह्यज्ञानस्यमुक्तावसंभवाच्चाज्ञानप्राप्तेरित्यर्थः ॥ ३७० ॥ नन्वज्ञानस्यअविद्यानिवृत्तिलक्षणमुक्तौनाशात्कथंपुनरज्ञानकल्प नेत्यतआह ॥ **भ्रांत्युत्थितस्येति** ॥ भ्रांत्युत्थितस्य बाधकज्ञानेनभ्रांतेरुत्थितस्य सकृन्नष्टभ्रमस्य तत्रैवतस्मिन्नेवार्थेभूयोभूयः

**शक्तिसौंदर्यशौर्यादियोगाच्छ्लाघ्यतरोहरिः ॥ ज्ञानेनाज्ञानादिदोषान्यदूरेद्रावयेत्प्रभुः ॥ ३६९ ॥**
**यदिस्वरूपज्ञानस्यनाज्ञानप्रतिकूलता ॥ तदामुक्तस्यचाज्ञानात्पुनस्संसारितापतेत् ॥ ३७० ॥**
**भ्रांत्युत्थितस्यतत्रैवभ्रमोभूयोभूयोभ्रमोस्तिहि ॥ नष्टाज्ञानस्यचभ्रांत्याकल्पनापिपुनःपुनः ॥ ३७१ ॥**
**अज्ञानभ्रांतयेदोषःकल्प्याज्ञानान्नचापरः ॥ प्रातीतिकंचतेऽज्ञानंनापिस्वभ्रमकारणं ॥ ३७२ ॥**

कालांतरेभ्रमोस्तिहीतिभावः । नष्टाज्ञानस्य प्राथमिकभ्रमनाशेनष्टाज्ञानस्य नष्टाज्ञानजातीयस्याज्ञानांतरस्य पुनःपुनःकल्पनापि भ्रांत्या इदंनजानामीत्यज्ञानकल्पकसाक्षिरूपभ्रांत्या अस्तिहि । तथाचअज्ञाननाशानंतरमपियथाअज्ञानांतराण्यपितत्तद्भ्रांत्याक ल्प्यंते । एवंमुक्तेपिब्रह्मणिस्वरूपज्ञानस्याज्ञानाविरोधित्वात् प्रत्युततस्यैवाज्ञानभ्रांतिरूपत्वात्तेनैवाज्ञानांतरकल्पनापिस्यात् । तेनचसंसारोपिस्यादितिभावः ॥ ३७१ ॥ ननुदोषाभावान्नमुक्तावज्ञानभ्रांतिरित्यतआह ॥ **अज्ञानभ्रांतयइति** ॥ अज्ञानभ्रां

तये योदोषःसः उपरिकल्प्यंयदज्ञानंतस्मादन्योन । अज्ञानपरंपरायाःपरेणानंगीकारात् । अतोमुक्तावपिकल्प्याज्ञानाख्यदोषस्य सत्त्वेनाज्ञानभ्रमस्स्यादितिभावः । एतेनसविलासाविद्यायाःनष्टत्वात्कथंपुनरज्ञानज्ञानमितिनिरस्तं । प्राचीनसकलाज्ञाननाशेपि मुक्तावेवाज्ञानभ्रमरूपेणस्वरूपज्ञानेनपुनस्तत्रैवाज्ञानांतरकल्पनयासंसारित्वापादनस्यापरिहारात् । प्राक्कल्प्याज्ञानस्यैवदोषत्वमि त्युक्तं । इदानीमज्ञानभ्रमेदोषएवनापेक्षितइत्याह ॥ प्रातीतिकंचेति ॥ प्रातीतिकं प्रतीतिसमसमयवर्ति नतुप्रतीतेःपूर्वंविद्यमान मित्यर्थः । अतस्स्वभ्रमकारणमपिनेतियोजना । कारणस्यपूर्वभावित्वनियमात् ॥ ३७२ ॥ अतः अज्ञानभ्रमस्यदोषापेक्षत्वानं

अतोभ्रांत्येककल्प्यस्यकुत्रकुत्रनकल्पना ॥ अनादिनास्तिचेत्किंनश्छिन्नं
मायैवकल्प्यतां ॥ ३७३ ॥ अतस्स्वरूपज्ञानेनज्वलज्ज्वालोज्ज्वलेनहि ॥
अज्ञानोच्चाटनंवाच्यंयत्संगान्मनसोपिचित् ॥ ३७४ ॥ ॥

गीकारात् । भ्रांत्येककल्प्यस्य केवलभ्रांतिमात्रेणकल्प्यस्य कुत्रकुत्रनकल्पना । कल्पकज्ञानसद्भावेसर्वत्रापिकल्पनास्यादिति भावः । ननुमुक्तौकल्प्यमानाज्ञानस्यकथमनादित्वमित्यतआह ॥ अनादीति ॥ किंनश्छिन्नमित्यनेनयथातवभ्रमानंतरभ्रमेक ल्प्यमानमज्ञानंसादि । तथात्रापिसंभवादितिसूचयति ॥ ३७३ ॥ उपसंहरति ॥ अतइति ॥ अत स्स्वरूपज्ञानस्याज्ञानाविरो धित्वेमुक्तावप्यज्ञानापातात् । यत्संगात्यस्याश्रितस्संगात् । मनसोपिचित् ज्ञान मर्थावभानशक्तिःअज्ञाननिर्हरणशक्तिश्चेत्यर्थः

॥ ३७४ ॥ उक्तयुक्त्युपोद्बलकस्मृतिंचस्मारयति ॥ मायामिति ॥ ३७५ ॥ दोषेणशबलत्वमेवदूष्यं । नतुगुणेनेत्यत्रदृष्टांतद्व यमपिदर्शयंश्छबलत्वनिराकरणमुपसंहरति ॥ दोषेणेति ॥ गोःशाबल्यंशबलत्वं । श्वित्रिणःकुष्ठव्याधिमतःचित्ररूपवत् नाना रूपवत् । लाल्यंकिंनेतिव्यतिरेकदृष्टांतः । अस्यपरमात्मनः नित्यमुक्तत्वशुद्धत्ववचनात् विद्यामयोयस्सतुनित्यमुक्तः अविकारो क्षरश्शुद्धइत्यादिवचनात् दोषिताक्क । दोषाशबलितत्वेइदंचहेतुद्वयमितिभावः ॥ ३७६ ॥ ननुकर्तृत्वांगीकारेक्रियावेशाख्यदो

मायांव्युदस्यचिच्छत्त्येत्युक्तंवाक्यमनुस्मर ॥ दोषेणशबलोदूष्योगुणेनतुमनःप्रियः ॥ ३७५ ॥
गोश्शाबल्यंनकिंलाल्यंश्वित्रिणश्चित्ररूपवत् ॥ नित्यमुक्तत्वशुद्धत्ववचनात्कास्यदोषिता॥३७६॥
क्रियावेशप्रसंगेनकर्तृत्वंनाचितोयादि ॥ तर्हिज्ञप्तिश्चचिन्नस्या त्सा धात्वर्थक्रियायतः ॥ ३७७ ॥
निष्क्रियंत्वितिवेदस्यपक्षपातोनविद्यते ॥ क्रियामात्रनिषेधित्वाद्द्वयंचप्रतिषेधति ॥ ३७८ ॥ ॥

षःस्यात् । अतःकथंकास्यदोषितेत्युक्तमित्यतआह ॥ क्रियावेशेति ॥ क्रियावेशप्रसंगेन क्रियावेशाख्यदोषप्रसंगेन । तर्हि चित् ब्रह्मचित् ज्ञप्तिश्चनस्यात् । यतस्साज्ञप्तिः धात्वर्थरूपाक्रिया ततइतियोजना ॥ ३७७ ॥ निष्क्रियंत्वितिवेदस्य निष्कलंनिष्क्रि यंशांतमितिवेदस्येत्यर्थः । प्रकृतोपयोगित्वात्तावतएवग्रहणं। पक्षपातः ज्ञप्तित्वरूपक्रियामंगीकृत्यकर्तृत्वरूपक्रियानंगीकाररूपः। निष्क्रियमितिवाक्येनसामान्यतःक्रियानिषेधांगीकारेकर्तृत्वनिषेधवत्ज्ञप्तित्वनिषेधोपिस्यात् । उभयोरपिक्रियात्वाविशेषादिति

भावः ॥ ३७८ ॥ ननुसत्यंज्ञानमनंतंब्रह्मेतिज्ञानत्वस्यविहितत्वान्नतन्निषेधति । ज्ञानातिरिक्तक्रियायाःविधायकाभावात्तन्मात्रं निषेधतीत्यतआह ॥ परास्येति ॥ ज्ञानबलक्रियाः सहैकवाक्येनैव प्राह । अतःज्ञानक्रिययोरेकवाक्योक्तत्वेनतयोरेकांगीकार स्यापरनिराकरणस्यचायोगात् श्रौतमिदं ज्ञानं जगत्सृष्ट्यादिक्रियांच । स्वगोत्रकलहाक्षमा निष्क्रियश्रुत्यासर्वथाक्रियानिषेधे स्वाभाविकीज्ञानबलक्रियाचेतिश्रुत्यंतरविरोधाख्यकलहप्रसंगात्तत्राक्षमेत्यर्थः । स्वगोत्रकलहस्यलोकेपिनिंदितत्वात्श्रुत्यंतरवि रोधस्यापिगोत्रकलहत्वेननिर्देशइतिज्ञातव्यं । पुण्यपापाभिधेक्रिये तयोरपिसत्क्रियादुष्क्रियेतिक्रियाशब्दवाच्यत्वात् पुण्यपापे

परास्येतिश्रुतिःप्राहसहज्ञानबलक्रियाः ॥ अतश्श्रौतमिदंत्यक्त्वास्वगोत्रकलहाक्षमा ॥
श्रुतिर्निषेधतीशेद्वेपुण्यपापाभिधेक्रिये ॥ ३७९ ॥ दुश्शब्दस्पर्शरूपादीन्विषयान्जड
विग्रहं ॥ अशब्दत्वादिकावाणीनिवारयतिवैदिकी ॥ ३८० ॥ ॥

विधूयेतिभगवज्ज्ञानिष्वपिविनिंदिते भगवतिसुतरांविनिंदितत्वेनतेएवनिषेधति । ईशइत्यनेन स्वोच्चारयितृत्वेनस्वस्याअपिईश त्वात् । ईशेतस्मिन्क्रियामात्रनिषेधेस्वोच्चारणक्रियामेवनकुर्यादितिदोषांतराच्चभीतिंसूचयति ॥ ३७९ ॥ अशब्दमस्पर्शमरूपमि त्यादिश्रुत्याब्रह्मणःरूपादिराहित्याख्यदोषःकथ्यतइतिभ्रांतिंनिवारयितुमाह ॥ दुःशब्देति ॥ दुःशब्दस्पर्शरूपादीनित्यत्र दुरि तिविशेषणंसर्वत्रसंबध्यते । शब्देदोषः तुच्छत्वशून्यत्वदुःखाधारत्वबंधाधारत्वादिप्रतिपादकत्वं तादृशशब्दराहित्यमशब्दश्रुते ॥ १९५ ॥

रर्थः । स्पर्शादिषु प्राकृतत्वमेवदुष्टत्वं तद्राहित्यमेवास्पर्शमित्यादिश्रुतेरर्थः अशरीरमिति । श्रुतेर्जडविग्रहाभावएवार्थः ॥३८०॥ नचे दुष्करीत्यादुश्शब्दादिराहित्यमर्थोन किंतुसामान्यतश्शब्दादिराहित्यमेवार्थश्चेत् । निष्कलंनिष्क्रियंशांतमित्यत्र निष्कलश ब्देनसमानन्यायत्वात्कलामात्रंनिवार्यतइति ब्रह्मणिज्ञानकलापि तेमतेनस्यादितिसबंधः । चतुष्षष्टिकलामध्येज्ञानस्यापिकला त्वेनपठितत्वात् । कथंचित्तत्समाधाने कलाशब्देनजडकलाएवकथ्यंते नतुकलासामान्यमितिसमाधाने । सर्वत्राशब्दमित्यादा वपि ॥ ३८१ ॥ अशब्दश्रुतेस्सामान्यतश्शब्दशून्यार्थकत्वेदोषांतरंचाह ॥ अशब्दश्रुतिलक्ष्यत्वइति ॥ ब्रह्मणस्सर्वथाशब्द

नचेन्निष्कलशब्देननस्याज्ज्ञानकलापिते ॥ कथंचित्तत्समाधानेसर्वत्रैवंमतिंकुरु ॥ ३८१ ॥ अशब्दश्रुतिल
क्ष्यत्वेमुख्यार्थाशब्दतागता ॥ अशब्दश्रुतिवाच्यत्वेमुख्यार्थाशब्दतागता ॥ ३८२ ॥ अशब्दश्रुत्यबोध्यत्वे
मुख्यार्थाशब्दतागता ॥ ३८३॥ यद्यशब्दश्रुतेरर्थस्सर्वथाशब्ददूरता ॥ तर्हीयंचश्रुतिस्तत्रमानंनेतिजितंपरैः
॥ ३८४ ॥ कथंचिच्छब्दयोगेतुश्रुतेर्मुख्यार्थतागता ॥ यथायोग्यार्थकथनेजितंत्वत्प्रतिवादिभिः ॥ ३८५ ॥

शून्यत्वंवदतः अशब्दमितिश्रुत्या ब्रह्मलक्ष्यंवा वाच्यंवा अबोध्यमेववेति विकल्प्यपक्षत्रयेप्येकमेवदूषणमुक्तं । मुख्यार्थोऽशब्द शब्दस्यमुख्यार्थभूताऽशब्दताशब्दमात्रागोचरता ॥ गतेति ॥ शब्दलक्ष्यत्वेपि गंगापदेनतीरस्येवशब्दगोचरत्वेनशब्दागोच रतागता । वाच्यत्वेपिसुतरां ॥ ३८२ ॥ सर्वथातच्छब्दाबोध्यत्वेतु प्रमाणाभावेनैवशब्दागोचरतागतेत्यर्थः ॥ ३८३ ॥ एतदेव विवेचयन्संगृह्यदूषणांतरंचाह ॥ यदीति ॥ ३८४ ॥ कथंचित्शब्दयोगे अशब्दत्वरूपस्वाभिलषितार्थसिद्ध्यर्थंअशब्दश्रुत्युक्त

शब्दाख्यशब्दयोगे । सर्वथाशब्दगोचरत्वस्यत्वयैवपरित्यक्तत्वात् श्रुतेर्मुख्यार्थतागता । त्वत्प्रतिवादिभि र्ब्रह्मणःसर्वसच्छब्दवाच्यत्ववादिभिर्जितं । त्वयास्वाभिलषितार्थसिद्ध्यर्थंक्रियमाणसंकोचवत् तैरपिदुश्शब्देत्याद्युक्तरीत्यासंकोचस्यकर्तुंशक्यत्वात् । दोषवर्जितेब्रह्मणितैरुच्यमानदुश्शब्ददूरत्वरूपार्थस्यैवयोग्यत्वादितिभावः ॥ ३८५ ॥ अस्पर्शश्रुतेरपिसर्वथास्पर्शशून्यार्थकत्वे दोषमाह ॥ यदीति ॥ तर्हि अविद्या मायावादिभिःउच्यमाना नस्पृशेत्ब्रह्मणस्स्पर्शंनकुर्यात् । त्वत्प्रतिवादिभिः अविद्यास्पर्शदूरत्ववादिभिः ॥ ३८६ ॥ कथंचित्स्पर्शितायां व्यावहारिकस्पर्शेनस्पर्शितायामित्यर्थः । मुख्यार्थता सर्वथास्पर्शशून्यत्वरूप

**यद्यस्पर्शश्रुतेरर्थस्सर्वथास्पर्शशून्यता ॥ नस्पृशेत्तर्ह्यविद्यापिजितंत्वत्प्रतिवादिभिः ॥ ३८६ ॥ कथंचित्स्पर्शितायांतुश्रुतेर्मुख्यार्थतागता ॥ यथायोग्यार्थकथनेजितंत्वत्प्रतिवादिभिः ॥३८७॥ यद्यस्तिमायिकोदेहश्श्रुतेर्मुख्यार्थतागता ॥ सोपिनैवास्तिचेत्तर्हिमायावंध्याभवत्तव ॥ ३८८ ॥ यथायोग्यार्थकथनेजितंत्वत्प्रतिवादिभिः॥३८९॥**

मुख्यार्थता । यथायोग्यार्थकथने ब्रह्मणियद्योग्यंतस्यैवार्थस्यकथने पूर्ववत्त्वत्प्रतिवादिभिर्जितं । अप्राकृतेब्रह्मणिप्राकृतस्पर्शराहित्यस्याविद्याख्यप्रकृतिस्पर्शराहित्यस्ययोग्यत्वादितिभावः ॥ ३८७ ॥ अशरीरश्रुतेरपिसर्वथाशरीरराहित्यार्थकत्वेदोषमाह ॥ यद्यस्तीति ॥ मुख्यार्थता सर्वथाशरीरराहित्यरूपमुख्यार्थता । सोपिमायिकदेहोपि । वंध्या स्वजन्यफलरहितेतियावत् । ब्रह्मणिदेहंसंपाद्यसंसारानुभावकत्वंहिमायायाःफलं । तदभावेसाव्यर्थेतिभावः ॥ ३८८ ॥ तदर्थंयथायोग्यार्थकथने । अप्राकृते

ब्रह्मणिप्राकृतदेहराहित्यस्यैवयोग्यत्वात्अशरीरश्रुतेःप्राकृतशरीरराहित्यरूपार्थवदद्भिःत्वत्प्रतिवादिभिर्जितमितिसंबंधः ॥३८९॥ अरूपश्रुतेःसर्वथारूपराहित्यार्थकत्वेदोषमाह ॥ सर्वथेति ॥ मायारूपेणमायाकल्पितरूपेण श्रुतेर्मुख्यार्थता सर्वथारूपराहित्या रूपमुख्यार्थता । यथायोग्यार्थकथने अप्राकृतेब्रह्मणिप्राकृतरूपराहित्यस्यैवयोग्यत्वात् तद्वदद्भिस्त्वत्प्रतिवादिभिर्जितमितिसं बंधः । अतएवादित्यवर्णतमसःपरस्तादितिश्रुतिःतमःपदोक्तप्रकृतिंनिषिध्यरूपमाह ॥ ३९० ॥ यदिमायिकोर्थःमायाकल्पितोर्थो

सर्वथारूपराहित्येरुग्मवर्णश्रुतिर्गता ॥ मायारूपेणरूपित्वेश्रुतेर्मुख्यार्थतागता ॥
यथायोग्यार्थकथनेजितंत्वत्प्रतिवादिभिः॥ ३९०॥ मायिकोर्थोनिषेधस्यवारकोय
दिनेष्यते ॥ घटेसत्यपिकिंभूमिरघटेतिनकथ्यते ॥ ३९१ ॥ किंतुप्रमाणसिद्धोर्थ
स्स्वतस्तंच्यावयेद्बली ॥ कन्यकानुदरेत्यादौयथाव्यवहृतौसतां ॥ ३९२ ॥ ॥

देहादिः निषेधस्य अशरीरमितिनिषेधस्य वारकःनिवारकोन । मायिकार्थेसत्यपिसामान्यनिषेधःकर्तुंशक्यतइतियावत् । दूषण माह ॥ घटेसत्यपीति ॥ तर्हिंमायिकघटेसत्यपि भूमिरघटेतिकिंनकथ्यते । मायिकस्यसामान्यनिषेधविरोधित्वाभावे सत्येवघ टेभूमिरघटेतिकथनीयैव । नचतथाकथ्यते । अतोमायिकोपिपदार्थःसामान्यनिषेधविरोधीतिभावः ॥ ३९१ ॥ कस्तर्हिंसामान्य निषेधस्यसंकोचकइत्यतआह ॥ किंत्विति ॥ प्रमाणसिद्धोयोर्थोघटादिः सःबली प्रामाणिकत्वेनबलवान् स्वतःस्वस्मात्तं सामा

न्यनिषेधं च्यावयेत् अन्यत्रनयेत् । तस्योदाहरणमाह ॥ कन्यकेति ॥ अनुदराकन्यकेत्यादौसतांव्यवहृतौयथातथात्रापीतिसं
बंधः । अनुदराकन्यकेत्यत्रप्रमाणसिद्धसूक्ष्मोदरंविहायानुदरेतिपदंतस्यामप्रामाणिकंस्थूलोदरमेवनिषेधति । तथाअशब्दादिश्रौ
तसामान्यनिषेधोपि प्रामाणिकंनारायणादिशब्दं लक्ष्मीकरादिस्पर्शं रुग्मवर्णादिरूपं सहस्रशीर्षेत्यादिश्रुत्युक्तालौकिकदेहंच वि
हाय दुश्शब्दादीनेवनिषेधतीतिभावः ॥ ३९२ ॥ अधुनाश्रुत्याश्रौतयुक्तिभिश्चभगवतिअप्राकृतरूपादिकंसाधयति ॥ आदि
त्यवर्णमिति ॥ तमसःपरस्तादितिश्रुतौकथितत्वादविद्यानिवृत्तौचेत्युक्तं । अतस्तन्नप्राकृतं । नाप्यपारमार्थिकमितिसिद्धं॥३९३॥

आदित्यवर्णंतमसःपरस्तादितिवैदिकी ॥ वागविद्यानिवृत्तौचरूपमाहपरात्मनः ॥ ३९३ ॥
रूपंचस्पर्शतोव्याप्तंतौसाकाराश्रितौसदा ॥ ततश्चैतन्यमात्रेपिश्रुतासाकारतामता ॥ ३९४ ॥

यद्रूपवत्तत्स्पर्शवदितिव्याप्तेःरूपंचस्पर्शतोव्याप्तमित्युक्तं । तौरूपस्पर्शौ । सदासाकाराश्रितौ । आकारवत्सुसावयववर्तुलाद्याकार
वत्सुपृथिव्यप्तेजोवायुष्वेवविद्यमानत्वेनतयोस्साकारपदार्थाश्रितत्वनियमादित्यर्थः । अस्त्वेवंकिमतइत्यतआह ॥ ततइति ॥
श्रुता विश्वतश्चक्षुरित्यादिनाचैतन्यमात्रेपिश्रुतासाकारता मता युक्तेरपिसंमता । युक्त्यापितमसःपरस्तादित्युक्ताप्राकृतप्रदेशेपि
रूपस्पर्शाकाराणांसाधितत्वात् । श्रुतेत्यनेनश्रुतिसंमत्याभगवतियुक्तिसिद्धोसौचाकारः । हस्तपादाद्याकारइतिसूचितं । ननुसा
कारत्वेकथंनानित्यत्वमितिचेत् परमाणोःपारिमांडल्यवत्हस्ताद्याकारस्यापिनित्यत्वादितिब्रूमः । उभयोरपिनित्यत्वेकथमवयवा

वयविभावइतिचेत् । न । आकाशतत्परिमाणयोर्गुणगुणिभाववदितिसंतोष्टव्यं ॥ ३९४ ॥ अत श्श्रुतियुक्तिमूलत्वात् । विश्वत
श्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पादिति । प्राक्सूचितश्रुतेःप्रतीकग्रहणाय विश्वतश्चक्षुरित्यादिविशेषणमुक्तं॥३९५॥
भगवतःअमायिकदेहवत्त्वेप्राक्सूचितांयुक्तिंविशदयन्युक्त्यंतरमाह ॥ मायाभावेपीति ॥ तमसःपरस्तादितिश्रुत्यादेहस्यापि
मायारहितस्थलेसाधितत्वात्मायाभावेपीत्युक्तं । तद्ब्रह्म सुखरूपंहि आनंदोब्रह्म कंब्रह्मखंब्रह्म विज्ञानमानंदंब्रह्म ज्ञानिनोज्ञान
यज्ञेनयजंतिज्ञानविग्रहमित्यादिश्रुतिस्मृतिप्रसिद्धिंहिशब्दद्वयेनसूचयतिमृण्मयंनहीत्यत्रमृण्मयपदेन पांचभौतिकदेहवत्त्वेघटा

अतस्सविश्वतश्चक्षुर्विश्वतोमुखएवच ॥ विश्वतोबाहुरीशोसौविश्वतःपात्परःप्रभुः ॥ ३९५ ॥
मायाभावेपियोदेहोज्ञानानंदात्मकोह्यसौ ॥ सुखरूपंहितद्ब्रह्मज्ञानरूपंनमृण्मयं ॥ ३९६ ॥
सत्वादिमृण्मयांतोयंमायासंतानएवहि ॥ मायामयमिदंविश्वंरोमकूपेप्यणुःकिल ॥ ३९७ ॥
महाकायस्यकायोसौचिन्मयोनहिमृण्मयः ॥ नयत्रश्रूयतेमायासत्वादेस्तत्रकाकथा ॥ ३९८ ॥

दिवत्मृण्मयत्वस्याप्यापत्त्याऽतिहीनतास्यादितिविपक्षेबाधकंचसूचयति ॥ ३९६ ॥ युक्त्यंतरंचाह ॥ सत्वादीति ॥ सत्वगु
णादिश्चासौमृण्मयांतश्चेतिसमासः । अयं महदहंकारादिजडप्रपंचः । मायासंतानः मायोत्पन्नकार्यपरंपरा । इदंपूर्वोक्तंविश्वम
खिलं मायामयं विष्णोःरोमकूपेअणुःकिल अणुवत्तिष्ठतिकिल । किलेत्यनेन यत्रप्रविष्टःपरमाणुवदितिभागवतवाक्यंसूचयति
॥ ३९७ ॥ एवंमहाकायस्यनारायणस्यासौकायः कोटिब्रह्मांडविग्रहइतिवासुदेवसहस्रनामोक्तकोटिब्रह्मांडाश्रयकायः चिन्मय

एव व्याप्तपरमात्मस्वरूपज्ञानानंदात्मकएव नतुमृण्मयः । मृदुपलक्षितपंचभूतमयोनहि । सत्वगुणादिसकलमायासंतानैर्मिलि
त्वातद्रोम्णोपिकर्तुमशक्यत्वाद्बृहच्छरीरश्रुत्युक्तमहाकायोसौकेनवाप्रकृतिविकारेणकर्तव्यः । अतः कशब्दोक्तसुखरूपत्वात् अय
पयगताविति धातोर्ज्ञानरूपत्वाच्च कायइतियुक्तिंहिशब्देनसूचयति । एवं शपदोक्तसुखं रपदोक्तक्रीडां ईरपदोक्तज्ञानंचादाय श्रुतौ
शरीरमितिचोच्यतइतिद्रष्टव्यं । शीर्यतइतिव्युत्पत्तौश्रुत्युक्तबृहबृंहवृद्धावितिधात्वर्थबृहत्त्वानुपपत्तेः तन्वावृधानेतिसमाख्याश्रु
तिविरोधाच्चेत्यपिद्रष्टव्यं । एतदेव नवर्ततेयत्ररजस्तमस्तयोस्सत्वंचमिश्रंनचकालविक्रमः । नयत्रमायाकिमुतापरेहरेरनुव्रतायत्र

स्वकार्यैस्सहमायायद्रोमकूपंनपूरयेत् ॥ तस्याव्याप्तंशरीरंतच्चिद्रूपंनजडोद्भवं ॥ ३९९ ॥
सुखज्ञानसुखस्पर्शस्सुखगंधस्सुखाकृतिः ॥ नखादिखशिखांतंचसुखतेजोमयःप्रभुः ॥ ४०० ॥

सुरासुरार्चिताइतिवचनांतरप्राप्तयुक्त्यंतरंसूचयन्स्पष्टयति ॥ नयत्रेत्यादिना ॥ ३९८ ॥ यद्रोमकूपं मायातत्कार्यशून्यत्वेनो
क्तवैकुंठस्थितनारायणरोमकूपं । तस्यनारायणस्य । पूर्वप्रकृतिविकाराणामल्पत्वात्नमहापरिमाणभगवद्देहोपादानत्वमित्युक्तं ।
अधुनामायातत्कार्यशून्यस्थलीयस्यकथंमायोपादानकत्वं । उपादानरहितस्थलेउपादेयस्यस्थित्ययोगादितियुक्तिरुच्यतइतिवि
वेकः ॥ ३९९ ॥ तर्हिकिंरूपोसावित्यतःप्राक्संक्षिप्योक्तंप्रपंचयति ॥ सुखेत्यादिना ॥ सुखमयाकारस्यानानुभविकत्वशंकाप
रिहारायसुखतेजोमयइत्युक्तं । सुखमप्राकृतं । तेजश्चाप्राकृतं सतन्मयइत्यर्थः । दिविसूर्यसहस्रस्यभवेद्युगपदुत्थिता । यदि

भाःसदृशीसास्याद्भासस्तस्यमहात्मनइतिगीतोक्तंभगवत्तेजःकथंलौकिकं । सूर्यतेजोतिरिक्ततेजसःलोकेऽदर्शनात् ॥ ४०० ॥ एवमशरीरश्रुतिरप्यलौकिकविग्रहमादायघटतइत्यत्रलौकिकदृष्टांतमाह ॥ अलौकिकशरीरेष्विति ॥ अदृश्यशरीरोत्था अस्मदादिभिरदृश्यालौकिकदेवशरीरताल्वोष्ठपुटोत्थदैविकवाक् आकाशवाणी अशरीरवागित्युच्यते । सर्वथाशरीराभावेवागुच्चारणस्यैवायोगादलौकिकशरीरोच्चरितैववाक्यथाशरीरवाक् तथाऽलौकिकशरीरेषुभगवद्रूपेषुअशरीरतायुक्तैवेतिपूर्वेणान्वयः ॥ ४०१ ॥ तर्हिशरीरवत्त्वाद्दुःखादिकंस्यादित्यतआह ॥ विलक्षणशरीरत्वादिति ॥ तद्भगवच्छरीरं । तत्रदृष्टांतमाह ॥

अलौकिकशरीरेषुविद्यतेह्यशरीरता ॥ यथाऽदृश्यशरीरोत्थादैवीवागशरीरवाक् ॥ ४०१ ॥
विलक्षणशरीरत्वान्नतद्दुःखादिकारणं ॥ अजीर्णतामनुष्यान्नाद्देवान्नादजरोमरः ॥ ४०२ ॥
कर्तृतानचितश्चेत्स्यादकृतागमसंकटं ॥ कर्तृतामिलितेचेत्स्याद्दुभयोरपिकर्तृता ॥ ४०३ ॥ ॥

अजीर्णतेति ॥ देवान्नात्अमृतात् । यथामनुष्यान्नविलक्षणदेवान्ने नमनुष्यान्नवद्दुःखदत्वं प्रत्युतदुःखकारणीभूतजरामरणादिपरिहारकत्वमेव । तथामनुष्यदेहाद्विलक्षणोभगवद्देहोनदुःखदायी प्रत्युतमहासुखहेतुःजरामरणाद्यभावहेतुश्चेतिभावः ॥ ४०२ ॥ क्रियावेशान्नकर्तृतेतिमतंप्राग्दूषितं । इदानींचिन्मात्रस्यनकर्तृतेतिमतंदूषयति ॥ कर्तृतेति ॥ चितश्चिन्मात्रस्य अकृतागमसंकटं नकृतमकृतं । स्वेनाकृतसाधनस्यफलस्यमोक्षरूपस्यागमःप्राप्तिस्सएवसंकटं । चितोऽकर्तृत्वेतेनाकृतसाधनोमोक्षःकथंचिन्मा

त्रस्यस्यादितिभावः । मिलिते विशिष्टे उभयोर्विशेषणविशेष्यभूतयोःउपाधिचैतन्ययोः ॥ ४०३ ॥ तदेवोपपादयति ॥ **विशिष्ट स्येति** ॥ अनात्मनिजडे । वस्तुतःस्वभावतः कर्तृतां । अनेनघटश्चलतीत्यादौकर्तृत्वमौपचारिकमितिसूचयति । युक्तिमानितिजड स्यकर्तृत्वंयुक्तिविरुद्धमितिद्योतयितुंहेतुगर्भंविशेषणं ॥४०४॥ तामेवयुक्तिंप्रदर्शयति ॥ **मर्त्यैरिति** ॥ मर्त्यैःमनुष्यैःवर्त्ये प्रवर्त्यमाने गमनच्छिदादिकर्मणि यद्यस्माद्विपश्चितः स्वतंत्रः करणादीनांप्रेरकस्वेच्छाधीनप्रवृत्तिर्देवदत्तःकर्तेत्याहुः । कुठारेणच्छिनत्ति पादे नगच्छतीत्यादौतस्मिन्नेवकर्तृपदप्रयोगात् । विशेषणीभूतपादादौकरणपदप्रयोगाच्चेतिभावः ॥ ४०५ ॥ एतदेवोदाहरणमुखेन

**विशिष्टस्यहिकर्तृत्वेविशेष्यस्यापिकर्तृता ॥ वस्तुतःकर्तृतांकोवावक्त्यनात्मनियुक्तिमान् ॥४०४॥ मर्त्यैर्वर्त्येयतस्व तंत्रःकर्तेत्याहुर्विपश्चितः ॥ ४०५ ॥ यथादंडमृदाद्यर्थैर्विशिष्टोलक्षितोपिवा ॥ कुलालएवघटकृत्तेसर्वेकारकां तरं ॥ ४०६ ॥ देहांतःकरणाद्यैश्चविशिष्टोलक्षितोपिवा ॥ जीवएवतथाकर्तातत्सर्वंकारकांतरं ॥ ४०७ ॥ ॥**

दर्शयति ॥ **यथेति** ॥ दंडमृदाद्यर्थै र्घटकारणदंडमृदादिवस्तुभिः आदिपदेनकालादिकंगृह्यते । तैर्विशिष्टोलक्षितोपिवेतियथा संभवमूह्यमितिभावः । कुलालएव कुलालाख्यचेतनएव घटकृत् कुंभकारः । एवकारेणमृदादिकंव्यवच्छिनत्ति । तेसर्वेमृद्दंडा द्याः कारकांतरं कर्तृव्यतिरिक्तकारकाणि । कुलालःमृद्दंडादिनिमित्तात्स्वशालायांघटंकरोतीत्यभियुक्तप्रयोगदर्शनादिति भावः ॥ ४०६ ॥ दृष्टांतमुक्त्वादार्ष्टांतिकेपियोजयति ॥ **देहेति** ॥ तथा कुंभकारवत् । तत्सर्वं देहांतःकरणादिकं ॥ ४०७ ॥ तदेवद



र्शयति ॥ **मनोहीति** ॥ तस्यचेतनस्य मनःकरणं । हीत्यनेन मनसःअंतःकरणत्वंसर्वजनसिद्धमितिदर्शयति । देहःअधिकरणं देहेहृद्गुहायांजीवस्यस्थितत्वेनप्रसिद्धत्वात् । कर्तृत्वे चैतन्यनिष्ठकर्तृत्वे । दायादी कर्तृत्वैकांशभागीकोस्ति नकोपीत्यर्थः । अवि द्याकर्त्रीभविष्यतीत्यतआह ॥ **मायापीति** ॥ माययाशबलितस्सन्देहेस्थितःअंतःकरणेनचक्षुषाचरूपादिविषयंपश्यतीतिप्रयो गान्मायायाअपिकरणत्वमेवेतिभावः । अथवा मायावशादितिप्रयोगदर्शनात्करणांतरं कारकांतरंवा । कर्मणिकर्तृत्वमनंगीकुर्व तःकरणेषुकर्तृत्वांगीकारःस्वन्यायविरुद्धश्चेत्यपिज्ञेयं । देहविशिष्टस्यैवयजमानस्ययागकर्तृत्वेतद्देहापायेसतिस्वर्गाख्यफलभोक्तृत्व

**मनोहिकरणंतस्यदेहोधिकरणंस्मृतं ॥ कर्तृत्वेकोस्तिदायादीमायापिकरणांतरं ॥ ४०८ ॥**
**विशिष्टार्थविमर्शेश्रूयतेश्चिन्मात्रकर्तृता ॥ मुसलाचत्वचंकश्चिन्मोचयेत्तद्विचक्षणः ॥४०९॥**
**अतोविशिष्टकर्तृत्ववादंशिष्टानमेनिरे ॥ सहकार्येवतत्रापिजडं कर्तातुचेतनः ॥ ४१० ॥**

स्याकस्मिकत्वप्रसंगाच्च ॥ ४०८ ॥ मायांतःकरणदेहादीनांमायावाद्यभिमतविशेषणानांकर्तृव्यतिरिक्तकारकांतरत्वनिदर्शनेना कर्तृत्वोपपादनस्वकौशलंग्रंथकारःस्वयमेवस्तौति । **विशिष्टार्थेति** । विमर्शेविचारेयतश्चिन्मात्रकर्तृताभूत् । तत्तस्माद्विचक्षणःमु सलाच्चत्वचंमोचयत् । अन्यासाध्यमपिकार्यंकस्यचित्कुशलस्यसाध्यंस्यादितिभावः ॥ ४०९ ॥ उपसंहरति ॥ **अतइति** ॥ अतः विशेषणानांसर्वेषांकारणांतरेषुप्रवेशात् । तत्रापिविशिष्टेपि जडमुक्तरीत्यासहकार्येव । कर्तातुचेतनएवेतिसंबंधः ॥ ४१० ॥ नन्व

ग्नीषोमयोर्देवतात्ववत्कर्तृत्वंव्यासज्यवृत्तिकुतोनेतिचेत् । न । कारणविभागप्रदर्शनेनदूषितत्वात् । अग्नीषोमावुद्दिश्यक्रियमाण कर्मणःद्विदेवतात्वस्यैवतत्कर्तृभिरुच्यमानत्वाद्दृष्टांतोपिनघटतइत्याह ॥ द्वावुद्दिश्येति ॥ देवते अग्नीषोमौदेवते ॥ ४११ ॥ दृश्यत्वंविशिष्टस्यैव नविशेष्ये अतोमिथ्यात्वसाधकदृग्विषयत्वरूपदृश्यत्वस्यनचिन्मात्रेव्यभिचारइतियन्मायिमतंतदपिदृगविष यत्वेअप्रामाणिकत्वाख्यदोषापत्त्यादूषयति ॥ समूहेति ॥ दंडीतिविशिष्टज्ञाने दंडदेवदत्ततत्संबंधानामपिपृथक्पृथग्विषयत्व दर्शनात् ॥ ४१२ ॥ अयंविषयत्वरूपधर्मः । द्वित्वेतिस्वमतरीत्या पृथक्त्वेतिपररीत्योक्तमितिद्रष्टव्यं । अन्यथाविशेष्यवद्विशेषण

द्वावुद्दिश्यकृतेयागेदेवतात्वंद्वयोरपि ॥ द्विदैवत्यंहितत्कर्मसंकल्पोदेवतेइति ॥ ४११ ॥
समूहालंबनज्ञानेविषयत्वंयथापृथक् ॥ तथाविशिष्टविज्ञानेविषयत्वंपृथक्पृथक् ॥४१२॥
व्यासज्यवृत्तिधर्मोयंनहिद्वित्वंपृथक्त्ववत् ॥ ४१३ ॥ ॥ ॥

स्यापिदृश्यत्वाभावेननक्वापिविशेषणस्यमिथ्यात्वमितिभावः । यदिचदंडादेर्विशेषणस्यपृथक्प्रतीत्यादृश्यत्वं तर्हि ब्राह्म विशिष्टप्र तीतावपीदंविशेष्य मिदंविशेषणमितिशिष्यंप्रतिबोधनसमयेब्रह्मचितोपिपृथक्प्रतीत्यादृश्यत्वमितिसमं । किंचययायुक्त्याविशे ष्यंदृश्यत्वाद्बहिष्करोषि तयैवयुक्त्यासाधिष्ठानत्वनियतभ्रमेपिविशेषणस्यदृश्यत्वाद्बहिष्कारसंभवेनदृष्टांतस्यसाधनवैकल्यापरि हारात् । वस्त्रपिहितदेवदत्तानुल्लेखेसतिविशिष्टप्रतीत्यदर्शनेनत्रितयोल्लेखस्याप्यावश्यकत्वात् । उल्लेख्यत्वातिरिक्तविषयत्वाभावा

च्च । अखंडार्थवादिनात्वयावेदांतानांब्रह्मचिन्मात्रविषयकनिर्विकल्पकप्रमाजनकत्वांगीकारेणचिन्मात्रेव्यभिचारस्यवज्रलेपायित त्वात् ॥ ४१३ ॥ युक्तियुक्तत्वाद्विशेष्यस्यैवकर्तृत्वमुपपादितं । कारकांतरसहकारस्तुकर्तुर्भगवतोप्यस्तीत्याह ॥ केवलस्येति ॥ केवलस्यकारकांतरासहकृतस्य । कालप्रकृतिविशिष्टस्यहरेःकर्तृत्वमस्त्वितिभावः ॥ ४१४ ॥ शंकते ॥ देहेति ॥ परिहरति ॥ आनंदमात्रेति ॥ आनंदमात्राः करणदेहादयोयस्येतिविग्रहः ॥ ४१५ ॥ आनंदमात्रदेहत्वेप्रागुक्तभागवतवाक्यंस्मारयन्निष्टा

केवलस्यह्यकर्तृत्वेकिंनंश्छिन्नंहरिश्चनः ॥ कालप्रकृतिकर्माद्यैस्सहैवकुरुतेजगत्
॥ ४१४ ॥ देहांतःकरणाद्येवकर्तृत्वेघटकंयदि ॥ आनंदमात्रकरणदेहादेरस्तुक
र्तृता ॥ ४१५ ॥ विदितोसिभवान्साक्षात्पुरुषःप्रकृतेःपरः ॥ केवलानुभवानंदस्व
रूपस्सर्वबुद्धिदृक् ॥ इतिभागवतेप्रोक्तेःकानोहानिरतोवद ॥ ४१६ ॥ यदिदृष्टंज
डस्यैवसहायत्वंगृहेगृहे ॥ तदादरिद्रदेशस्थःस्वर्णकुंभजलंत्यजेत् ॥ ४१७ ॥

पत्तिंकरोति ॥ विदितोसीति ॥ नोस्माकंतववादिनां ॥ ४१६ ॥ पुनरपिशंकते ॥ यदिदृष्टमिति ॥ जडस्यदेहस्य सहायत्वं कर्तृत्वोपयोगित्वं । सोपहासमुत्तरमाह ॥ तदेति ॥ स्वग्रामेमृद्धटस्यैवजलाहरणोपयोगित्वदर्शनात् सभाग्यग्रामेततोप्युत्तमस्व र्णघटोदकंत्यजेत् । स्वग्रामेअदृष्टत्वस्यतत्रापिसाम्यात् । कार्यस्यततोतितरांसंभवेस्वग्रामेअदृष्टिरप्रयोजिकाचेत्प्रकृतेपिदीयतांदृ

ष्टिरितिभावः ॥ ४१७ ॥ तदेवोपपादयति ॥ सुवर्णेति ॥ स्वस्थाभवेत् । चेतनभूतावेशादिना । यात्रायामक्षमः यथाजडस्य
गरुडाकारस्यचेतनानुग्रहमात्रेणकार्यकारित्वेसाक्षाच्चेतनगरुडस्यसुतरांकार्यकारित्वं तथाजडदेहात्चिदात्मकदेहस्यकार्यकारित्वंकै
मुत्यसिद्धमितिभावः ॥ ४१८ ॥ चिदात्मकदेहस्यकार्यकारित्वानंगीकारेबाधकमाह ॥ यदाहीति ॥ निष्पत्तिः परंज्योतिरुपसं
पद्यस्वेनरूपेणाभिनिष्पद्यते । सतत्रपर्येति । जक्षन्क्रीडन्रममाणस्त्रीभिर्वायानैर्वेतिश्रुत्युक्ताभिव्यक्तिः । तत् श्रुत्युक्तंरूपं । स्वे

सुवर्णगरुडस्थस्ययात्रास्वस्थाभवेत्किल ॥ साक्षाद्गरुडकंठस्थश्चित्रंयात्राऽक्षमःकिल
॥ ४१८ ॥ यदाहिरूपनिष्पत्तिर्मुक्तौजीवस्यजायते ॥ नहितत्प्राकृतंरूपंस्वेनेत्यस्य
विरोधतः ॥ ४१९ ॥ मुक्तत्वव्याहतेश्चातश्चिद्रूपंरूपमुच्यते ॥ ४२० ॥ येनपर्येति
सस्त्रीकोयानैर्गच्छतिपश्यति ॥ हसतिक्रीडतेरूपंदेहोयंनात्रसंशयः ॥ ४२१ ॥

नेत्यस्य बाह्यदेहव्यावर्तकविशेषणस्य । स्वस्वरूपभूतेनेतिहितस्यार्थः । बाह्यसकलदेहनिवृत्तिरूपेमोक्षेकथ्यमानंस्वत्वमिदमेव
नान्यदितिभावः ॥ ४१९ ॥ अतःमौक्तरूपत्वात् । रूपंदेहः ॥ ४२० ॥ ननुरूपपदंचैतन्यस्वरूपपरं । नतुदेहपरमित्यतआह
॥ येनेति ॥ श्रुतौ सःनिष्पन्नरूपइतिहेतुगर्भविशेषणेनरूपेणैवपर्यटनादेःकथनात् स्त्रीरमणादेर्देहंविनाऽयोगाच्च रूपपदोदितोदे
हएवेतिभावः । नचेयंमुक्तिर्जीवन्मुक्तिः येनप्राकृतदेहोपिसंपद्यते । स्वस्वरूपाभिनिष्पत्तेर्जीवन्मुक्तावभावात् ॥ ४२१ ॥ युक्त्यं



तरंचाह ॥ फलाध्यायइति ॥ संपद्याविहायेत्यनेन संपद्याविहायस्वेनशब्दादितिसूत्रंगृह्णाति । यंमोक्षं फलाध्यायेआदरादसूत्र
यदितियोजना । संपद्येतिप्राप्तिमुक्त्वा पुनरविहायेतितस्याएवसदातनत्वेनविशेषितत्वादादरादित्युक्तं । वेदांतविद्याफलत्वेनसाध
नाध्यायेज्ञानपादोक्तापरोक्षज्ञान्याख्यजीवन्मुक्तस्यफलतयाचकथ्यमानेयंमुक्तिःकथमवांतरमुक्तिरितिभावः ॥ ४२२ ॥ तर्हियत्र
त्वस्यसर्वमात्मैवाभूत् । तत्केनकंपश्येत् । केनकंजिघ्रेदितिश्रुतेःकागतिरित्यतस्सूत्रकाराभिमतदृढनिरूढस्पष्टेतरश्रुतिबलादस्प
ष्टतयासावकाशायास्तस्याएतदनुकूलतयैवार्थःकथनीयइतिभावेनाह ॥ यत्रत्वस्येति ॥ तर्कमुद्रया । यद्यस्यमुक्तस्यसर्वमात्मैवा

फलाध्यायेहिसंपद्याविहायेतियमादरात् ॥ असूत्रयत्सूत्रकारस्समोक्षःपरमोध्रुवः ॥ ४२२ ॥
यत्रत्वस्येतिवाक्यंतुप्रवृत्तंतर्कमुद्रया ॥ दृढीकरोतीममर्थंयत्तर्कौंतविपर्ययः ॥ ४२३ ॥ अव्य
योक्तेरनेकार्थेशासनेत्वनुशासनात् ॥ सामान्यवचनंह्येतत्पूर्ववाक्तुविशेषवाक् ॥ ४२४ ॥

भूत् । मायावाद्युक्तरीत्याआत्मव्यतिरिक्तंकिमपिनाभूत् । तत्तर्हिकेनकरणेनकंपश्येदित्यादिरूपेणप्रवृत्तमित्यर्थः । इमं मुक्तस्य
देहेंद्रियादिसद्भावरूपं । यत्तुयस्मा त्तर्कः अंतविपर्ययः अंतेअवसानेविपर्ययः विपर्ययेपर्यवसानंयस्यसः । तस्माद्दृढीकरोतीति
पूर्वेणान्वयः । तर्हिकेनकंपश्येदितिदर्शनाक्षेपरूपतर्कस्य पश्यतिजिघ्रतिचतेनेंद्रियेणतंविषयं । अतःमायावाद्यभिमतचैतन्यमात्रा
त्विशेषबलेनातिरिक्तदेहेंद्रियादिकमप्यस्तीतिविपर्ययपर्यवसानस्यतर्केऽवश्यमपेक्षितत्वात्पूर्वश्रुत्युक्तदेहेंद्रियादिदृढीकरणायेयंश्रु
तिःप्रवृत्तेतिभावः ॥ ४२३ ॥ यत्रेत्यस्ययदीत्यर्थःकथंस्यादित्यतआह ॥ अव्ययोक्तेरिति ॥ अनुशासनात् । अव्ययानामने

कार्थत्वमित्यभियुक्तवचनादित्यर्थः । एतत् यत्रत्वस्येतिवाक्यं सामान्यवचनं सावकाशवाक्यं । पूर्वावाक् परंज्योतिरुपसंपद्येति वाक् विशेषवाक् पर्यटनस्त्रीरमणादेर्निरवकाशतयाकथनात् ॥ ४२४ ॥ श्रुत्योरेकस्याःव्यावहारिकार्थतयाअप्रामाण्यं । अपर स्याःप्रामाण्यमितिव्याख्यानंनीतिविरुद्धंचेत्याह ॥ जंबुकइति ॥ मेषयुद्धार्थी मेषयोःपरस्परयुद्धेसतितच्छिरोविदारणोत्थरक्तं पिबामीत्याशयामेषयुद्धार्थी । पोषकः मेषयोरुभयोरपिरक्षकः अविपालः वृद्ध्यर्थी वृद्धिमेवप्रार्थयमानःस्वपोष्यमेषाणांमध्येएक स्यापिमरणमसहमानइतियावत् । एवंश्रुतिघातकस्त्वंयत्किंचिज्जल्पसि । श्रुतिरक्षकस्तुवेदव्यासःतद्भक्ताश्चएकामपिश्रुतिंहंतुंने

जंबुकोमेषयुद्धार्थीवृद्ध्यर्थीपोषकोजनः ॥ ४२५ ॥ नचेत्कामान्निताकामरूपितागा
नकर्तृता ॥ भोक्तृतासर्वकामानांकुप्यंत्येतेविमुक्तिगाः ॥ ४२६ ॥ तवत्वापातवा
क्यार्थाच्छून्यतैवेत्यपार्थता ॥ चित्रचिद्रूपदेहास्तज्जीवास्सर्वेपिसर्वदा ॥ ४२७ ॥

च्छंतीतिभावः ॥ ४२५ ॥ नचेत् एवमविरुद्धार्थोनकथ्यतेचेत् । कामान्नीकामरूप्यनुसंचरन् । एतत्सामगायन्नास्तेइतिश्रुतौ सोश्नु तेसर्वान्कामानितिश्रुतौचकथिताःकामान्नित्वादयश्चत्वारोमुक्तविशेषणीभूतधर्माःजीवन्मुक्तावसंभाविताःकुप्यंति निरवकाशबहु श्रुत्युक्तशोभनार्थापहारिणंत्वामंधेतमसिनिक्षिपंतीत्यर्थः । निरवकाशबहुश्रुतीनामप्रामाण्यकथनात्सावकाशैकश्रुतेरनुकूलार्थक थनमेवन्याय्यमितिभावः ॥ ४२६ ॥ परकीयार्थेवाक्यमर्यादयैवबाधकंचाह ॥ तवत्विति ॥ आपातवाक्यार्थात् आपाततः

प्रतीतवाक्यार्थात् । विज्ञातारमरेकेनविजानीयात् येनेदमखिलंवेद तंचकेनविजानीयादितिस्वस्वरूपज्ञानस्यब्रह्मरूपज्ञानस्यचाभावोक्त्याशून्यतैवभविष्यतीत्यर्थः । विषयाद्यभावमंगीकुर्वतापिमायावादिनास्वस्वरूपंब्रह्मरूपंचनापलप्यते । तस्यस्वप्रकाशतयाज्ञानंचांगीक्रियते । तदपिनस्यात् । अतस्त्वयाप्यस्मदुक्तर्कमुद्रैवाश्रयणीयेतिभावः । तत्तस्मा न्मुक्तौस्त्रीपुरुषदेहानामावश्यकत्वात् ॥ ४२७ ॥ तत्पदं देहपदं चिद्रूपदेहप्रावरणरूपत्वादेवलिंगदेहस्यदेवत्वं । नोचेत्जडांतरेष्वदृष्टंदेहत्वंकथमस्येतिभावः ॥ ४२८ ॥ हरेस्त्विवतितुशब्देनकदाचिद्बद्धात्पुनर्मुक्ताज्जीवाद्विशेषंसूचयति । तदेवस्पष्टयति ॥ नित्यमुक्तस्येत्यादिना ॥ सर्व

चिद्रूपाकारहेतुत्वाल्लिंगदेहेपितत्पदं ॥ बंधेतुप्राकृतोप्यस्तिमुक्तौचिन्मात्रकंवपुः ॥ ४२८ ॥
हरेस्तुनित्यमुक्तस्यदेहस्सर्वत्रसर्वदा ॥ बलज्ञानप्रभासौख्यसौंदर्यादिगुणात्मकः ॥ ४२९ ॥
तस्यैषआत्माविवृणुतेतनूंस्वामितिश्रुतिः ॥ भगवत्प्राप्तितःपश्चात्तनुंवक्तिविमुक्तिगां ॥ ४३० ॥

त्रसर्वदेत्यत्रहेतुसूचनायनित्यमुक्तस्येतिहेतुगर्भंविशेषणं । प्राकृतदेहवत्त्वेनित्यमुक्तत्वव्याकोपात्विद्यामयोयस्सतुनित्यमुक्तइतिनित्यमुक्ततयाश्रूयमाणस्यभगवतो देहःज्ञानानंदादिशुभगुणात्मकएवेत्यप्राकृतदेहवत्त्वेनित्यमुक्तत्वंचहेतुरितिभावः ॥ ४२९ ॥ निरवकाशस्पष्टश्रुत्यंतरेणापिनित्यमुक्तस्यहरेर्मुक्तानांचानादिनित्यचिदानंदात्मकस्वरूपभूतदेहवत्तांप्रसाधयन्तस्यदुःखाहेतुतांकेवलसुखहेतुतांचप्रसाधयति ॥ तस्यैषइति ॥ अनेन नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन । यमेवैषवृणुतेतेनलभ्य

स्तस्यैषआत्माविवृणुतेतनूंस्वामितिंश्रुतिंसंगृह्णाति । तेन स्वप्रसादपात्रीभूतेनमुक्तेनलभ्यःप्राप्यइत्युक्तत्वात्भगवतःप्राप्तितःपश्चा
दित्युक्तं । तनुंमुक्तजीवतनुं । तस्यस्वांतनुमित्युक्तेर्जीवतनोःप्राप्तेर्मुक्तजीवतनुमित्युक्तं ॥ ४३० ॥ श्रुतेरर्थांतरमप्याह ॥ तदा
पीति ॥ ईशतनोश्श्रीनारायणविग्रहस्य । लभ्यइत्युक्तपरमात्मनोपिस्वपदेनवक्तुंशक्यत्वात्ईशतनोर्वेत्युक्तं । विवृणुतइत्युक्तत्वा
न्मुक्त्यनंतरंप्रतिबंधकाभावेनसदासाक्षात्कारस्यसत्वादिदमुक्तं । यतःउक्तरीत्याऽर्थद्वयस्यापिश्रौतपदलभ्यत्वात् श्लोक्यंस्तुत्यं
॥ ४३१ ॥ प्रागुक्तश्रुतितोस्याःश्रुतेस्स्पष्टताकथमित्यतआह ॥ तनुरिति ॥ ४३२ ॥ तनोस्स्वरूपभूतताकथमित्यतआह ॥ स्वा

तदापीशतनोस्साक्षात्कारंवावक्तिवाग्घिसा ॥ अर्थद्वयंयतोवाक्यस्यास्यश्लोक्यंबुधैस्सदा ॥४३१॥ तनुश्शरीर
मेवेयंरूपमात्रंनवैतनुः ॥ घटत्वरूपेकिंकश्चिद्विपश्चित्प्राहदेहतां ॥४३२॥ स्वामित्युक्त्यातनुस्साचस्वरूपैवेतिसि
द्ध्यति ॥ जडान्यदेहनिर्मोक्षात्स्वीयत्वार्थोह्यपार्थकः ॥ ४३३ ॥ दृङ्मात्रंजडदेहस्यकिंमहाकरुणाफलं ॥ ४३४ ॥

मित्युक्त्येति ॥ स्वामित्यस्यस्वीयामित्यर्थःकुतोनेत्यतआह ॥ जडान्यदेहनिर्मोक्षादिति ॥ जडः अन्यः जीवाद्भिन्नोदेहः
तस्यनिर्मोक्षान्नितरांमोचनात् । मुक्तिकालेलिंगशरीरस्थूलशरीरयोरुभयोरपिमोचनादित्यर्थः । स्वीयत्वार्थःअपार्थकोव्यर्थः ।
भिन्नदेहोहि स्वीयतयावक्तुंशक्यते । तदभावात् आत्मात्मीयज्ञातिधनवाचीस्वशब्दइत्यप्राथमिकार्थत्वाच्चस्वामित्यस्यस्वरूपभू ॥ २०३ ॥
तामित्येवार्थउच्यतइतिभावः ॥ ४३३ ॥ जडदेहार्थत्वेबाधकांतरंचाह ॥ दृङ्मात्रमिति ॥ जडदेहस्यदृङ्मात्रं विवृणुतइतिपदो

क्तदर्शनमात्रं महाकरुणायाः वृणुतइतिपदोक्तांगीकाराख्यमहाकरुणायाःफलंकिमितिसंबंधः । श्रवणादिजन्यमहाप्रसादसिद्ध्युत्तरं
पुनर्जडदेहस्यतद्दर्शनस्यचसंसारहेतुत्वेनविरुद्धत्वादितिभावः ॥ ४३४ ॥ विवृणुतइतिव्यक्तिमात्रप्रकीर्तनात्केवलंव्यक्तेरेवकथ
नात्पूर्वंविद्यमानत्वसिद्ध्याऽनादित्वं विवृणुतइतिव्यक्तेस्सदावर्तमानत्वकथनान्नित्यत्वंचेति अस्यदेहस्यानादिनित्यताचसिद्धेति
संबंधः । तेनचोक्तरीत्यासिद्धेनअनादिनित्यत्वेनचइयंश्रुत्युक्तातनुःजडान्यैवसंसिद्धेतियोजना । प्रागुक्तयुक्तिसमुच्चयार्थश्चश

अनादिनित्यताचा(स्या)स्यव्यक्तिमात्रप्रकीर्तनात् ॥ सिद्धातेनचसंसिद्धाजडान्यैवतनूरियं ॥ ४३५ ॥
अतश्श्रुत्यर्थतत्वज्ञास्तनुंमुक्तपरात्मनोः ॥ चिदानंदमयींप्राहुर्नप्राहुर्जडदेहितां ॥ ४३६ ॥ साचज
न्मजरारोगह्रासनाशाद्यभावतः ॥ नक्लेशदातयोस्तस्मात्कथंदोषावहावद ॥ ४३७ ॥ किंतुसौंदर्यसौ
रभ्यप्रभामंदस्मितेक्षितैः ॥ आलिंगनैरालपनैश्चित्रमाल्यानुलेपनैः ॥ ४३८ ॥ ॥

ब्दः ॥ ४३५ ॥ अत श्श्रौतपदपर्यालोचनेसतिअनादिनित्यस्वरूपभूतदेहलाभात् चिदानंदमयीं चिदानंदात्मकचैतन्यस्वरूपत
याचिदानंदप्रचुरां ॥ ४३६ ॥ सास्वरूपभूतातनुः । तयोर्जीवपरमात्मनोः । दोषावहा मलिनत्वसंपादिका । जडदेहवत्त्वेहिमलि
नत्वरूपशबलतास्यात् । चिदानंदात्मकदिव्यदेहवत्त्वेकथंमालिन्यं । अन्यथाचिदानंदशबलतयापिमालिन्यप्रसंगादितिभावः
॥ ४३७ ॥ नकेवलंदोषावहानेत्येव । किंतुमौक्तसकलमहोत्साहसंपादकत्वेनमहाश्रेयस्करीचेत्याह ॥ किंत्वित्यादिनामहोत्सा

हावहैवहील्यंतेनग्रंथेन ॥ ४३८ ॥ ४३९ ॥ अतःउक्तरीत्यादोषाहेतुत्वाद्गुणसंपादकत्वाच्च ॥ ४४० ॥ ज्ञानानंदस्वरूपत्वात्स्वरूपभूतदेहेनभगवतश्शबलतानेतीममर्थंसाहित्यमुद्रयाचसाधयति ॥ ददतीति ॥ शंसुखंबलंचददतीभगवतस्तनुः । अतएवशंबलरूपत्वेनशंबलशब्दवाच्याच । त्वच्छबलत्वं मायावादिनात्वयोक्तशबलत्वं बहिः भगवतोबहिः अमुक्तजीवादिषुक्षिपेदितिसंबंधः । पांचभौतिकदेहान्जीवानेवशबलीकुर्यात् । ज्ञानानंदमयदिव्यदेहेभगवतिशबलतायाअवकाशमपिनदिशेदितिभावः ।

परा(र्थ्य)र्घ्यभूषणैर्मौक्तनृत्तवादित्रकीर्तनैः ॥ भोगैश्चविविधैर्नित्यंमहोत्साहावहैवहि
॥४३९॥ अतस्तयाशबलतानविद्वज्जनसंमता ॥४४०॥ ददती शंबलंचत्वच्छबलत्वंबहिः
क्षिपेत् ॥ बिंदुमात्राधिकत्वेपिप्रबलोदुर्बलंक्षिपेत् ॥ ४४१ ॥ चित्रप्रकाशबलतश्शबलो
वास्तुनःप्रभुः ॥ यतोस्य हासोधवलस्तनुर्नीलाऽधरोरुणः ॥ ४४२ ॥ ॥

तत्रलोकन्यायमाह ॥ बिंदुमात्रेति ॥ बिंदुमात्राधिकत्वेपि प्रबलः बिंदुमात्रेणापिप्रबलइत्यर्थः । क्षिपेन्निराकुर्यात् । अल्पबलेनाधिकोपिप्रबलःतावद्बलरहितंदुर्बलंघातयेदित्यर्थः । प्रकृतेपिपरोक्तशबलात्अस्मदुक्तरीत्याशंबलरूपाभगवत्तनुःबिंदुमात्रेणाधिकेतितत्क्षिपेदितिसाहित्यमुद्रयाफलितोर्थः । सुखज्ञानरूपतयाशबलतांवारयेदितितत्वार्थः ॥ ४४१ ॥ एवंदोषरूपांपरोक्तशबलतांनिराकृत्यगुणरूपांकांचनशबलतामंगीकरोति ॥ चित्रेति ॥ यतःपरमात्मनःहासःमंदहासःधवलश्श्वेतः तनुःनीलानीलवर्णा ।

अधरः अधरोष्ठः अरुणः रक्तवर्णः उपलक्षणंचैतत् । हस्तपादतलान्यरुणानि । नखानामावलिश्श्वेता । अक्षिणीपुंडरीकवत्श्वेते । कटाक्षौद्वौनीलौ । तदंतप्रदेशौईषदरुणौचेत्यपिद्रष्टव्यं । ततः चित्रप्रकाशबलतः विचित्रकांतीनांबलतः नःप्रभुःशबलःअस्तुवेति योजना । नानावर्णतया गोरिव गोविंदस्यापिशबलतायांननोहानिरितिभावः । साहित्यमुद्रयापरनिराकरणकौशलं स्वस्वरूपनिरूपणकौशलंचपश्यतोभगवतः कृपयामंदहासोभूदितिसूचनायसएवादौगृहीतः ॥ ४४२ ॥ भगवतःअमायिकानादिनित्यदेहवत्त्वंगीतावाक्येनापिसाधयति ॥ नांतमित्यादिना ॥ यस्यदेहस्य अस्यविश्वरूपाख्यरूपस्येतिसंबंधः । अनेन नांतंनमध्यंनपु

नांतंनमध्यंनैवादिंयस्यापश्यद्रणेर्जुनः ॥ अनंतबाहुजठरवक्त्रनेत्रभ्रमद्भ्रुवः ॥
विश्वरूपाख्यरूपस्यदृष्टस्यज्ञानचक्षुषा ॥ ४४३ ॥ अनंतगंधाभरणान्यनंत
कुसुमानिच ॥ अनंतान्यंबराण्यस्यकेनदत्तानिसर्वदा ॥ ४४४ ॥ ॥

नस्तवादिंपश्यामिविश्वेश्वरविश्वरूपेतिवचनंसूचयति । अत्राद्यंतशून्यतयाऽर्जुनदृष्टभगवद्देहस्यानादिनित्यत्वंस्पष्टमुक्तं । पश्यामि देवांस्तवदेवदेहइतिदेहस्यैवप्रस्तुतत्वात् अनंतबाहूदरवक्त्रनेत्रंपश्यामित्वांसर्वतोनंतरूपमित्यस्यपद्यस्यपूर्वार्धएवप्रस्तुतत्वाच्च देहस्यैवानादिनित्यत्वमुच्यते । अस्यश्वविरूपदेहस्य सर्वदाकेनदत्तानि । सर्वदेत्यनेन तदीयानामनंतानांगंधाभरणकुसुमांबरादीनामपिलक्ष्म्यात्मकतयाऽनाद्यनंतत्वं सूचयति । अर्जुनदर्शनसमयेऽनंतानांतेषांकोवासंपादकोस्ति । अतस्तान्यप्यनंतानि ।

किमुवाच्यंतदाधारदेहस्येतिभावः ॥ ४४३ ॥ ४४४ ॥ तस्य विश्वरूपदेहस्य । तदुदरकोणेक्वचित्स्थिताअदितिर्देवकीवानसवित्री । नन्वस्य देहस्यतत्प्रसूतत्वाभावेपि अवतारदेहस्यभविष्यतीत्यतआह ॥ यइति ॥ योदेहइतिसंबंधः । दौत्यंदूतभावं । अर्जुनरथसारथ्यमितियावत् । सएवसारथ्यकारीदेहएव एतादृशःकिल विश्वरूपदेहःकिल । किलेत्यनेन तस्यैवदेहस्यविश्वरूपत्वं नतुसदेहोन्यः अयमन्यइतिरूपद्वयकल्पनं । भारतभागवतादिविरुद्धत्वादितिसूचयति । तेनैवरूपेणचतुर्भुजेनसहस्रबाहोभवविश्वमूर्तेइत्यस्यैवरूपस्यचतुर्भुजरूपाकारत्वस्योक्तत्वात् तद्रूपंतथैवास्तिचेत्किमर्थमियंप्रार्थना । अतस्तस्यैवरूपस्यस्थूलतांसूक्ष्मतां

सवित्रीतस्यदेहस्यनादितिर्नापिदेवकी ॥ योदौत्यमाचरद्देहस्सएवैतादृशःकिल ॥ ४४५ ॥ अनाद्यनंतदेहेस्मिन्कनिराकारताचते ॥ दिव्यदृष्ट्यैवदृष्टोयंकथंमायामयोभवेत् ॥ ४४६ ॥ मायादूरत्ववाचाचनेदंमायामयं वपुः ॥ ४४७ ॥ अपरिच्छिन्नदेहोयंपार्थप्रत्यक्षगोचरः ॥ परिच्छिन्नभवन्मायामयोनैवेतिमेमतिः ॥ ४४८ ॥

चस्वशक्त्याभगवान्प्रदर्शयति ॥ ४४५ ॥ अस्मिन्ननाद्यनंतदेहेसति तवनिराकारताक्व देहापगमेहिपराभिमतानिराकारतास्यात् । उक्तविधयादेहस्यानादिनित्यत्वेतुनिराकारतादेशांतरंगतेतिभावः । दिव्यंददामितेचक्षुःपश्यमेयोगमैश्वरमितिवचनाद्दिव्यदृष्ट्यैवदृष्टइत्यर्थः । मायायाःभ्रांतदृष्टिगम्यत्वनियमेनायंदेहःकथंमायामयोभवेदित्यर्थः ॥ ४४६ ॥ प्रागुक्तवचनान्यपिस्मारयति ॥ मायेति ॥ चशब्दाद्युक्तिभिश्च ॥ ४४७ ॥ भगवद्देहस्यमायामयत्वाभावेस्मार्तयुक्त्यंतरंचाह ॥ अपरिच्छिन्नेति ॥ ४४८ ॥ 

ततएवापरिच्छिन्नत्वादेव । सःदेहः । परमात्मवदितिदृष्टांतः । विमतोभगवद्देहः परमार्थसत्यः सार्वकालीनतयानित्यश्चेति साध्यद्वयं । अपरिच्छिन्नत्वात्परमात्मवदितिप्रयोगोद्रष्टव्यः । अनेनैवहेतुनाप्रमेयांतरमपिसिद्धमित्याह ॥ ब्रह्मवदिति ॥ त्वन्नाय त्त्वसिद्धांतरीत्यैव । मन्नयादेवन । परमतेब्रह्मणोन्यत्रापरिच्छिन्नत्वाभावात् पररीत्यैवेदमनुमानमितिभावः ॥ ४४९ ॥ भगवतःअमायिकदेहवत्त्वेपुनरपियुक्तिद्वयमाह ॥ क्वानंतेति ॥ प्रकाशतमसोःपरस्परविरोधादितियुक्तिरने

ततएवससत्योभून्नित्यश्चपरमात्मवत् ॥ ब्रह्मवच्चिन्मयोप्यासीत्त्वन्नयान्नैवमन्नयात् ॥ ४४९ ॥
क्वानंतसूर्यसंकाशप्रकाशोमुक्तिदःप्रभुः ॥ क्वतेतमोमयीमायायंप्रपन्नोपियांतरेत् ॥ ४५० ॥
प्रायोदग्धपटप्रायायायज्ज्ञानोदयेहृदि ॥ मायानिस्तरणोपायस्सोयंमायामयःकिल ॥ ४५१ ॥
अस्त्यस्तितोक्तौनास्तीतिप्रतिवागतिवादिनि ॥ सहस्रशीर्षाश्रौतोयोनैकशीर्षाप्यसौकिल ॥ ४५२ ॥

नसूचिता । यंपरमात्मानंप्रपन्नः श्रवणमननादिनाप्रपन्नः शरणंप्राप्तः यांमायां मामेवयेप्रपद्यंतेमायामेतांतरंतितइति वचनात् । यदातद्भक्तोपिमायातरणसमर्थःतदासुतरांसभगवानितियुक्तिरनेनसूचिता ॥ ४५० ॥ युक्त्यंतरंचाह ॥ प्रायइति ॥ यज्ज्ञानोदयेयस्यापरोक्षज्ञानोदये यामाया । मायानिस्तरणोपायस्सभगवान्स्वदर्शनमात्रेणमायांदग्धपटोपमांकुर्वन्नित्यर्थः । तयामाययामायामयःकिलेत्युपहासः ॥ ४५१ ॥ ॥ ७ ॥ इदानींपुरुषसूक्तार्थवक्तुंतत्प्रसक्त्यर्थंकांचननीतिंवदन्प्रतिवादिनम

पहसति ॥ अस्तीति ॥ अस्तितोक्तौ अस्तीतिकस्यचित्विशिष्टस्योक्तौसत्यां । अतिवादिनि बहुभाषिणि यत्किंचिज्जल्पतिखले नास्तीतिप्रतिवाक् अस्तीत्यस्यप्रतिवाक्अस्ति । यत्किंचिदबद्धंप्रतिवदत्येवेत्यर्थः । तत्कुत्रदृष्टमित्यतउक्तंसहस्रशीर्षेत्यादि ॥ यःपरमात्मा सहस्रशीर्षाश्रौतः सहस्रशीर्षेतिश्रुतिप्रतिपादितइत्यर्थः । असावेकशीर्षापिनकिल । अस्याःदुर्नीतेः सहस्रशीर्ष्णो हरेर्निराकारतावाद्येवनिदर्शनमितिभावः ॥ ४५२ ॥ पुरुषसूक्तस्यविराट्पुरुषइतिहरेरन्यः कश्चित्पुरुषःप्रतिपाद्यइतिवदंतमपिदुर्नीतिविषयंप्रतिपादयति॥ छलीति॥ कोपिछली सूर्योनास्तीत्युक्त्वास्वोक्तनिर्वाहायसूर्याच्छादनायकरंप्रसारयेत् । तत्कुत्रदृष्टमित्य

छलीसूर्याच्छादनायकरंकोपिप्रसारयेत् ॥ सप्रकारंहियंविद्वान्मुच्येतसकिलाल्पकः॥ ४५३ ॥
अतःपुरुषसूक्तस्यविराट्पुरुषसूक्ततां ॥ वदंतोवादिनःपूर्वोत्तरज्ञानविवर्जिताः ॥ ४५४ ॥

तउक्तं ॥ सप्रकारमित्यादि ॥ सप्रकारं सहस्रशीर्षत्वादिविशेषणसहितंयंपुरुषंविद्वान्मुच्येतमुक्तिंप्राप्नुयात् । तमेवंविद्वानमृत इहभवतीतियाजुषपुरुषसूक्तेश्रवणात् । एवमित्यनेनपूर्वोक्तविशेषणानांपरामर्शात्सप्रकारमित्युक्तं । अमुक्तिदातापुरुषः अल्पकः किल विष्णोरन्यःकश्चननीचपुरुषःकिल । एवंवादीसूर्याच्छादनायकरप्रसारणकर्तुःसमः । मोक्षदायकस्यमहापुरुषस्यस्ववाचातुच्छीकरणादितिभावः ॥ ४५३ ॥ तदेवविवेचयति ॥ अतइति ॥विराट्पुरुषसूक्ततां विराट्पुरुषप्रतिपादकसूक्ततां । तमेवंविद्वानित्युत्तरवाक्यापरिज्ञानाद्वा ऋग्वेदपुरुषसूक्तसमाख्ययोक्तयजुर्वेदपुरुषसूक्ताज्ञानाद्वा पूर्वोत्तरज्ञानविवर्जिताइत्यर्थः ॥४५४॥

प्रकारांतरेणापिपूर्वोत्तरज्ञानविवर्जिताइत्याह ॥ सहस्रशीर्षमिति ॥ यतःयस्मात् इतियाजुषोपनिषत् नारायणस्यैवसहस्रशीर्षत्वंजगौ । सहर्षशीर्षदेवमित्यादिविशेषणान्युक्त्वा नारायणमितिनारायणस्यैवस्पष्टंविशेष्यतयानिर्देशात् । तत स्संदिग्धवाक्यस्यनिर्णायकवाक्यानुसारेणव्याख्यातव्यत्वात् ॥४५५॥ पुंसूक्तगः पुरुषसूक्तप्रतिपाद्यः ॥४५६॥ प्रकारांतरेणापिपूर्वोत्तरज्ञानशून्याइत्याह ॥ अग्निर्मुखंतइति ॥ अग्निर्मुखंतइत्याद्यैरित्यनेन अग्निर्मुखंतेऽवनिरंघ्रिरीक्षणंसूर्योनभोनाभिरथोदिशःश्रुतिरित्यादिपद्यंसंगृह्णाति । सएव कृष्णएव अर्थात् अर्थैक्या द्धीमतांमते पुंसूक्तार्थोहि । पुरुषसूक्तसमाख्यारूपतयाकृष्णप्रतिपादकभागवत

सहस्रशीर्षदेवंविश्वाक्षंविश्वशंभुवं ॥ विश्वंनारायणंदेवमक्षरंपरमंपदं ॥ ४५५ ॥ इतिना
रायणस्यैवयाजुषोपनिषज्जगौ ॥ यतस्सहस्रशीर्षत्वंततःपुंसूक्तगोप्यसौ ॥ ४५६ ॥ अग्निर्मु
खंतइत्याद्यैःपद्यैर्यंकृष्णमंबुनि ॥ अक्रूरोस्तौत्सएवार्थात्पुंसूक्तार्थोहिधीमतां ॥ ४५७ ॥
तत्रगत्वाजगन्नाथंदेवदेवंवृषाकपिं ॥ पुरुषंपुषरुसूक्तेनउपतस्थेसमाहितः ॥ ४५८ ॥ ॥

वाक्यापरिज्ञानात् पूर्वोत्तरज्ञानशून्याइत्यर्थः । मुखादिंद्रश्चाग्निश्च । पद्भ्यांभूमिः । चक्षोस्सूर्यः । नाभ्याआसीदंतरिक्षं । दिशःश्रोत्रादित्यादिपुरुषसूक्तसमाख्यारूपत्वादग्निर्मुखमित्यादिवाक्यस्य कार्यकारणयोरैक्यव्यपदेशइतिन्यायेनमुखादग्निरित्यादिरेवार्थोग्राह्यः । स्मृत्यापुरुषसूक्तस्यकृष्णप्रतिपादकत्वनिर्णया च्छ्रुत्याचस्मृतेर्विभक्तिव्यत्यासनिर्णयाच्छ्रुतिस्मृत्योःपरस्परोपकारितयातिसख्यात्तदुक्तमियंनोल्लंघयति । एतदुक्तंचसापिनोल्लंघयतीतिभावः ॥४५७॥ प्रकारांतरेणपरेषामकौशलंप्रदर्शयति ॥तत्रेति॥

विष्णौपुरुषाख्यां निरवकाशपुरुषाभिधां उदीरयन्शुकः पुरुषंवृषाकपिमिति पुरुषसूक्तं तत्सूक्तंविष्णुसूक्तं यतःस्पष्टमुक्तवान् पुरुषसूक्तेनवृषाकपिमितिस्पष्टमुक्तवान् । उपान्मंत्रकरणइतिसूत्रान्मंत्रकरणेविवक्षितेउपादित्युपसर्गादात्मनेपदविधानात् उपतस्थइत्युक्त्यापुरुषसूक्तस्यविष्णुमंत्रत्वस्यापिकथनात्स्पष्टमित्युक्तं । नह्यन्यमंत्रेऽन्यस्यप्रतिपादनंयुक्तं । अतः उक्तविवेकशून्यत्वात् ॥४५८॥४५९॥ पुरुषसूक्तार्थकथनस्यप्रकृतोपयोगंदर्शयति ॥ साक्षादिति ॥ हियस्मा त्प्राकृतविज्ञानादप्राकृतपदंमु

इतिभागवतेविष्णौपुरुषाख्यामुदीरयन् ॥ यतःपुरुषसूक्तंचतत्सूक्तंस्पष्टमुक्तवान् ॥
अतोप्यकुशलास्तेवैवेदार्थकथनोद्यताः ॥ ४५९ ॥ साक्षान्मोक्षांगतोक्तेस्सामूर्तिर
प्राकृतैवहि ॥ नहिप्राकृतविज्ञानादप्राकृतपदंभवेत् ॥ ४६० ॥ सहस्राक्षिशिरःपा
दैर्यतोत्यंतविलक्षणः ॥ पुरुषःपूर्ववाक्येनविश्वव्याप्तश्चकीर्त्यते ॥ ४६१ ॥ ॥

क्तिर्नभवेत् । तस्मात्साक्षान्मोक्षांगतोक्तेः एवंविद्वानितिसहस्रशीर्षत्वादिप्रकाराणामपिमोक्षोपयोगिज्ञानविषयत्वोक्तेरित्यर्थः । सामूर्ति स्सहस्रशीर्षाद्याकारमूर्तिः ॥ ४६० ॥ पुरुषएवेदंसर्वमित्यस्यैक्यार्थत्वेबाधकंवदन्निदर्शनपूर्वकंस्वाभिमतार्थमाह ॥ सहस्राक्षीत्यादिना ॥ सहस्राण्यक्षीणिशिरांसिपादाश्चतैः । समासांतविधेरनित्यत्वात्वैलक्षण्यस्यस्फुटीकरणायचैकवद्भावोनास्ति । यतःयस्मात् ।अत्यंतविलक्षणः अनंतबाहूदरवक्त्रनेत्रइतिस्मृतिसमाख्ययासहस्रपदस्यानंतार्थकत्वात् तस्यजडेवाचेतनेवाक्काप्यसं



भवादत्यंतविलक्षणःपुरुषइत्युक्तं । पूर्ववाक्येन सहस्रशीर्षापुरुषइतिपूर्ववाक्येन । विश्वव्याप्तश्च सभूमिंविश्वतोवृत्वात्यतिष्ठदिति वाक्येनकीर्त्यते ॥ ४६१ ॥ उत्तरत्रच उत्तरवाक्ये। अस्यपुरुषस्य। ईशत्वपूर्वः मुक्तेशत्व संसार्यतिक्रांतत्व ज्यायस्त्वपूर्वइत्यर्थः। महिमोच्यतइतिसंबंधः । अनेनापिपूर्ववदत्यंतविलक्षणःपुरुषोभूदितिभावः ॥ ४६२ ॥ अतःपूर्वोत्तरवाक्ययोःस्पष्टबहुविरुद्धधर्मकथनेनात्यंतवैलक्षण्यस्यैवोक्तत्वात्ऐक्यवाक्न । तन्मध्येपतितमिदमपिवाक्यमैक्यप्रतिपादकंनेत्यर्थः । तत्रहेतुमाह ॥ उपक्रमे

उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ एतावानस्यमहिमाततोज्यायांश्चपूरुषः ॥ इत्युत्तर
त्रचेशत्वपूर्वोस्यमहिमोच्यते॥४६२॥ अतःपुरुषएवेदंसर्वमित्यपिनैक्यवाक् ॥ उपक्रमोपसंहा
रौयद्वाक्यार्थनियामकौ ॥ ४६३ ॥ यदधीनायस्यसत्तातत्तदित्येवभण्यते ॥ राजैवराष्ट्रमि
त्यादिप्रयोगस्तन्निदर्शनं ॥ ४६४ ॥ अतःपुरुषएवेतिपुंसस्स्वातंत्र्यवागियं ॥ ४६५ ॥ पूर्वोत्त
रोक्तसुगुणरत्नमाला महामणिं ॥ मध्येबिभर्तिनपुनःकाचंवाचामगोचरं ॥ ४६६ ॥ ॥

ति ॥ यत् यस्मात् । उपक्रमोपसंहारानुगुण्येनैवमध्यगतवाक्यार्थस्यापिनिर्णेयत्वादितिभावः ॥ ४६३ ॥ तर्हिवाक्यस्यकोर्थइत्यतआह ॥ यदधीनेति ॥ तन्निदर्शनं यदधीनेत्याद्युक्तन्यायस्यदृष्टांतः ॥ ४६४ ॥ अतःनियम्यनियामकयोरैक्यव्यपदेशस्य दृष्टत्वात् पुंसः पुरुषस्य स्वातंत्र्यवाक् स्वातंत्र्याख्यमहिमप्रतिपादकवाक् ॥ ४६५ ॥ पूर्वोत्तरानुगुण्येनमध्येपिवाक्यार्थकल्पना

कर्तव्येत्यत्रलोकदृष्टांतमाह ॥ पूर्वोत्तरोक्तेति ॥ सुगुणरत्नमाला शोभनगुणाख्यरत्नमाला । गुणबाहुल्यान्मालेत्युक्तं । मध्येपि महामणिं नायकरत्नं सकलगुणेषुस्वातंत्र्याख्यगुणस्यश्रेष्ठत्वात् स्वातंत्र्येहिनिर्दुःखानंदादिकंसंभवत्यन्यथानेत्यतोमहामणिमित्युक्तं । काचं नैच्यापादकत्वेनकाचोपममैक्यं । वाचामगोचरमित्यनेन परमतेतस्यैक्यस्यवागविषयत्वंस्मारयति ॥ ४६६ ॥ तदेवोपपादयति ॥ यदिति ॥ तेमते । स्वप्रकाशात्मरूपमितिहेतुगर्भविशेषणं । स्वप्रकाशत्वेनब्रह्मणःशास्त्रावेद्यत्वंवदतातदभिन्नैक्यस्यापितथात्वस्यावश्यंवक्तव्यत्वादितिहेतोस्सूचनात् । अखंडार्थवादाख्ययुक्तेरप्युपलक्षणमेतत् । अतोपिनास्यवाक्यस्यैक्यमर्थइति

यत्स्वप्रकाशात्मरूपमैक्यंतेवाक्यदूरगं ॥ ४६७ ॥ विरुद्धधर्मास्तइमेसाक्षान्मोक्षांगताबलात् ॥ अनिवर्त्याश्चसत्याश्चकदैक्यावसरोवद ॥ ४६८ ॥ एवंविद्वानितिज्ञानंश्रूयतेसप्रकारकं ॥ निष्प्रकारकधीवेद्यंतेऽद्वैतंनात्रशोभते ॥ ४६९ ॥ एतावानस्यमहिमाततोज्यायांश्चपूरुषः ॥ इतिपूर्वोक्तमहिमाज्यायस्त्वेहेतुरुच्यते ॥ ४७० ॥ ॥

भावः ॥ ४६७ ॥ ननुविरुद्धधर्माणांमिथ्यात्वान्नैक्यबाधकत्वमितिशंकां वेदाप्रामाण्यप्रसंगेनदूषितामपिदोषांतरेणदूषयति ॥ विरुद्धधर्माइति ॥ साक्षान्मोक्षांगताबलात् तमितिपुरुषस्य एवमितितद्धर्माणांच वेदनस्यसहैवमोक्षहेतुत्वकथनादित्यर्थः । अनिवर्त्याः ब्रह्मवदनिवर्त्याः सत्याश्च ॥ ४६८ ॥ ऐक्यार्थकत्वेदूषणांतरमाह ॥ एवंविद्वानिति ॥ निष्प्रकारकचरमवृत्तिवेद्यत्वे नांगीकृतंतवैक्यं । अत्र सप्रकारकज्ञानविषयधर्मबोधकेवाक्ये ॥ ४६९ ॥ ऐक्यार्थकत्वाभावेयुक्त्यंतरंचाह ॥ एतावानिति ॥

यतोस्यपुरुषस्यमहिमा एतावा न्पूर्वोक्तप्रकारेणबहुसंख्याकइत्यर्थः । ततःकारणात् पुरुषःज्यायान्सर्वोत्तमइतिपूर्वोक्तमहिमा ज्यायस्त्वेयतोहेतुरुच्यते । अतःपूर्वोदितः पूर्ववाक्यैरुदितः सर्वोप्यर्थः महिमा महिमरूपः । नचेत् मध्येऐक्यमुक्त्वामहिमरूपतानोच्यतेचेत् । हेतुः एतावानस्यमहिमेत्युक्तोहेतुर्विरुद्धस्स्यात् । त्वयोच्यमानैक्याख्य ज्यायानित्युक्तसर्वोत्तमत्वाख्यसाध्यविपर्ययव्याप्तत्वादितिभावः । अनुवादोप्यनन्वितः । एतावानित्यनेनैक्यस्याप्यनुवादेतस्यमहिमघातकत्वेनपुनर्महिमेतिपदमग्निनासिंचेदितिवदर्थतएवानन्वितंस्यादित्यर्थः ॥ ४७० ॥ ४७१ ॥ पुरुषएवेदंसर्वमित्यस्यस्वोक्तार्थेनियाम

अतःपूर्वोदितोप्यर्थस्सर्वोपिमहिमाभवेत् ॥ नचेद्विरुद्धोहेतुस्स्यादनुवादोप्यनन्वितः ॥ ४७१ ॥
सोमृतस्याभयस्येशोमर्त्यमन्नंयदत्यगात् ॥ इतिस्मृत्यनुसारेणमर्त्यामृतपदोक्तयोः ॥ ४७२ ॥
मुक्तामुक्तचितोरीशोह्युत्तरार्धेसकथ्यते ॥ अतोजडपदार्थस्यापीशत्वंवक्तिपूर्ववाक् ॥ ४७३ ॥

कांतरंचदर्शयति ॥ सोमृतस्येति ॥ स्मृत्यनुसारेण भागवतवाक्यानुसारेण मर्त्यामृतपदोक्तयोर्मर्त्यमन्नंयदत्यगादित्यन्नपदस्यमर्त्यार्थकथनात् अमृतत्वस्येत्यस्यामृतस्येत्यर्थकथनात् मुक्तामुक्तचितोरित्युक्तं । उत्तरार्धे उतामृतत्वस्येत्युत्तरवाक्यार्धे । सपुरुषः । अतः चेतनाचेतनयोर्मध्येचेतनेशानत्वकथनात् । पुरुषएवेदंसर्वमितिपूर्ववागपि जडपदार्थस्यापीशत्वं वक्तीतियोजना । जडाजडात्मजगतोर्जडेशत्वंपूर्वमुक्त्वा अजडेशत्वंपश्चाद्वक्तुमुचितंनान्यदितिभावः ॥४७२॥४७३॥ पूर्ववाक्ये

जडत्वज्ञापकंकिमित्यतआह ॥ दृश्यमानमिति ॥ इदंपरिदृश्यमानं इदंपदस्यपरिदृश्यमानार्थकत्वाद्दृश्यमानमित्युक्तं । तादृशं चसर्वंप्रायशोजडमेवहि । अतस्तन्नियामकतयातदीशत्वमेवात्रोच्यतइतिभावः । एवमनंगीकारेबाधकमाह ॥ नचेदिति ॥ कथ मित्यतआह ॥ मुक्तामुक्तचितोरिति ॥ सर्वंजडात्मकः पुरुषएवेदंसर्वमितिवाक्यस्यैक्यार्थकत्वेजडैक्यप्राप्तेस्सर्वजडात्मकइ त्युक्तं । एवंचमुक्तामुक्तचितोरीशः जडाभिन्नश्चेत्येतत्सर्ववादिमतविरुद्धमितिभावः ॥ ४७४ ॥ तदेवदर्शयति ॥ देहोपीति ॥ देहोप्यात्मानचेत् । देहोपीत्यपिपदेनातिसमीपस्थतयाअहमितिव्यवह्रियमाणतयाचसंभावितैक्योपीतिसूचयति । इदंघटपटा

दृश्यमानमिदंसर्वंप्रायशो जडमेवहि ॥ नचेदतिविरुद्धोक्तिरियंस्यात्सर्ववादिनां ॥ मुक्तामु
क्तचितोरीशःकथंसर्वजडात्मकः ॥ ४७४ ॥ देहोप्यात्मानचेत्सर्वंदृश्यमानमिदंजडं ॥ कथं
पुरुषएवस्यादेवेत्यत्यंतदुर्घटं ॥ ४७५ ॥ विशिष्टैक्यंहितस्यार्थोयज्जीवेपिनयुज्यते ॥ ४७६ ॥

दिकंपुरुषएवकथंस्यात् । चार्वाकातिरिक्तसर्ववादिभिरपिदेहात्मविवेकस्यांगीकारादितिभावः ॥ एवेति ॥ पुरुषएवेत्यत्रोक्तमे वेतिपदं अत्यंतदुर्घटं । यदासर्वंपुरुषइत्यपिनवक्तुंशक्यते तदापुरुषएवेतिसुतरांवक्तुंनशक्यतइत्यर्थः । अनेनपदेनात्यंताभेदकथ नात्भेदाभेदांगीकारेणापिनात्रनिर्वाहःशक्यइतिभावः ॥ ४७५ ॥ भावांतरंचाह ॥ विशिष्टैक्यमिति ॥ तस्यैवकारस्य विशि ष्टैक्यं यावंतिविशेषणानिसहस्रशीर्षत्वादीनि तावद्विशेषणविशिष्टमैक्यं । चिन्मात्रैक्येहिपुरुषएवेतिनवक्तुमुचितं । किंतुपुरुषस्यै 

कदेशइत्येववक्तव्यं । पुरुषएवेत्युक्ते यथापुरुषोस्तितथैवेत्यर्थस्यप्रतीयमानत्वात् । एवपदमहिम्नाविशिष्टैक्यमेवायाति । नतुचि न्मात्रैक्यमितिभावः । यद्विशिष्टैक्यंजीवेपिनयुज्यते तत्कथंजडेस्यात् । अतएवप्रागत्यंतदुर्घटमित्युक्तं ॥ ४७६ ॥ ऐक्यार्थकत्वे बाधकांतरंचाह ॥ नष्टानुत्पन्नेति ॥ यद्भूतंयच्चभव्यमितिभूतभव्यपदोदितात् । भूतपदस्यातीतार्थकत्वा द्भव्यपदस्यभविष्य दर्थकत्वात् नष्टानुत्पन्नजडतइत्युक्तं । एवंचभूतभव्यपदबलादपिजडमेवात्रप्रतिपाद्यमितिसूचयति । अनादिनित्यस्य प्रागभाव प्रध्वंसविधुरस्य ॥ ४७७ ॥ भावाभावविरोधश्चनास्तिकिमित्यनेना भावप्रतियोगिनोजडस्यभावरूपस्यपुरुषस्यैक्येभावाभाव

नष्टानुत्पन्नजडतोभूतभव्यपदोदितात् ॥ ऐक्यंत्वनादिनित्यस्यपुरुषस्येतिकोवदेत् ॥ ४७७ ॥
भावाभावविरोधश्चनास्तिकिंसर्वसंमतः ॥ घटोपिविद्यमानोयंनहिनष्टघटात्मकः ॥ ४७८ ॥
पूर्वोक्तमर्थंसर्वंचतच्छब्दोयंपरामृशेत् ॥ कथंविरुद्धयोरेकफलसाधनतावद ॥ ४७९ ॥ ॥

विरोधोपिदत्तजलांजलिस्स्यादितिसूचयति । विरोधमेवदर्शयति ॥ घटोपीति ॥ घटेप्यसंभावितमिदंकथंपरमात्मन्युच्यतइति भावः ॥ ४७८ ॥ ऐक्यार्थत्वेऽन्यदपिबाधकमाह ॥ पूर्वोक्तमिति ॥ तच्छब्दः तमेवंविद्वानित्यत्रश्रुतः तमितिपूर्वपरामर्शीतच्छ ब्दः । पूर्वोक्तं सहस्रशीर्षेत्यादिपूर्ववाक्योक्तं सर्वंपरामृशेदितिसंबंधः । सर्वमित्यनेन तन्मध्यपतितंपुरुषएवेदंसर्वमितिवाक्योक्त मर्थमपिसंगृह्णाति । विरुद्धयोः इतरवाक्यानांभगवन्महिमप्रतिपादकत्वेनभेदपरत्वात् अस्यचवाक्यस्यैक्यार्थत्वांगीकारे परस्पर

विरुद्धयोरित्यर्थः । महिमप्रतिपादकवाक्यानांबहुत्वेपि जातावेकवचनमंगीकृत्येदंद्विवचनमितिद्रष्टव्यं । विद्वानित्यत्रोक्तज्ञान द्वाराऽमृतोभवतीत्युक्तमोक्षाख्यैकफलसाधनता । भेदज्ञानस्यैक्यज्ञानस्यचमिथोविरुद्धत्वेनैकफलसाधनत्वायोगात् । नहिग्रा मात्परावृत्यागमनेनतमेवग्रामंप्रत्याभिमुख्यगमनेनचैकग्रामप्राप्तिरस्ति । नचजलपानात् वह्निज्वालापानाच्चतृषापरिहाराख्यैक फलप्राप्तिर्दृष्टा । अतस्सर्ववाक्यानामपिभेदपरतायथाभवतितथैवयोजनिकाकर्तव्या । नतुमध्येएकवाक्यस्यैक्यपरतापीतिभावः ॥ ४७९ ॥ नन्वितरवाक्यार्थमपरामृश्यस्वापेक्षितैक्यवाक्यार्थमेवायंतच्छब्दःपरामृशतीतिमंदाशंकांसाहित्यमुद्रयापरिहरति

अनपेक्षितसंत्यागःस्वापेक्षितपरिग्रहः ॥ कथंस्यात्सूक्तसूत्रेस्मिन्दृढवद्धार्थसन्मणौ ॥ ४८० ॥
स्वेच्छानुसारिव्याख्याचेन्मीमांसाकिंनिबंधना ॥ सूत्रच्छेदंविनामध्यमणेर्नैवहिसंग्रहः ॥ ४८१ ॥

॥ अनपेक्षितेति ॥ सूक्तसूत्रे एकार्थप्रतिपादकत्वात् एकसूक्तात्मकेपुरुषसूक्ताख्यतंतौ अपौरुषेयत्वेनान्यथीकर्तुमशक्यतया दृढंबद्धोयोर्थः सएवसन्मणिः तस्मिन् । अनपेक्षितसंत्यागः स्वस्यानपेक्षितानामितरवाक्यार्थानांसंत्यागः स्वापेक्षितपरिग्रहः स्वापेक्षितस्यैक्यवाक्यार्थमात्रस्यपरिग्रहश्चकथंस्यादितियोजना अपौरुषेयवाक्यतयाएकांशेप्यप्रामाण्यासंभवेनकस्यचिद्भागस्य व्यावहारिकार्थपरतापरित्यागःकस्यचिदंगीकारश्चनवक्तुमुचितः । परामर्शस्यपक्षपाताभावादितिभावः ॥ ४८० ॥ युक्त्यंतरंचाह ॥ स्वेच्छेति ॥ स्वेच्छानुसारिणीव्याख्यास्वेच्छानुसारिव्याख्या। वेदोक्तोप्यर्थःकश्चिन्मिथ्या कश्चित्सत्यइतिव्याख्येतियावत् ।

मीमांसा वाक्यानांपरस्परविरोधेसतिउभयोरपिवाक्ययोरविरुद्धार्थकथनेनप्रामाण्यरक्षणरूपा । किंनिबंधना व्यर्थेत्यर्थः । अनपेक्षितवाक्यानांमिथ्याभूतार्थकत्वेनाप्रामाण्यंवक्तुंशक्यंचेत्किमर्थमियंमीमांसेतिभावः । प्रागुक्तसाहित्यमुद्रयालब्धमर्थमाह ॥ सूत्रच्छेदमिति ॥ मध्यमणे मालामध्यस्थितरत्नस्य संग्रहः मालातःपृथक्कृत्यस्वीकारः । एवंसूत्रस्याप्रामाण्याख्यच्छेदंविनापूर्वोत्तरवाक्योक्तमहिम्नांपरित्यागेनमध्यवाक्योक्तैक्यपरामर्शोप्यशक्यइतिभावः ॥ ४८१ ॥ अस्तुतर्हिसूत्राप्रामाण्यमित्यतआह ॥ छिन्नइति ॥ सूत्रे सूक्ताख्यसूत्रे छिन्नेअप्रामाण्येनविनाशिते अनालंबः तमेवंविद्वानितिसूक्तमध्यपतितपरामर्शवाक्यस्याप्य

छिन्नेसूत्रेत्वनालंबःपरामर्शोप्ययंपतेत् ॥ अतोज्ञानैकसाध्योर्थोनस्यात्तेस्यात्तमोंततः ॥ ४८२ ॥
तस्मान्मीमांसकैरार्यैरुक्तएवार्थइष्यते ॥ अन्योह्यनर्थःश्रोतुर्वावक्तुर्वानमनोहरः ॥ ४८३ ॥

प्रामाण्यप्रसंगेनमूलीभूतस्वप्रतिपादकप्रमाणशून्यइत्यर्थः । पतेत्गच्छेत् । सूक्तस्याप्रामाण्येपरामर्शवाक्यस्याप्यप्रामाण्यप्रसंगेन भवदभिलषितैक्यपरामर्शोपिनस्यात् । उपलक्षणंचैतत् । अप्रमाणवाक्यमध्यपतितभवदभिमतैक्यवाक्यस्याप्यप्रामाण्यापरिहारे णैक्यमपिनसिद्ध्येदितिभावः । अस्तुपरामर्शपतनं कानोहानिरित्यतआह ॥ अतइति ॥ अतः तमेवंविद्वानितिपरामर्शवाक्यस्याप्रामाण्येननाशितत्वात् तेतव, ज्ञानैकसाध्योर्थःमोक्षः नस्यात् । ज्ञानेनमोक्षंप्राप्स्यामीतिहितवाशयः तन्नस्यात् । मोक्षस्य ज्ञानसाध्यत्वेप्रमाणाभावात् । ततश्चांतत स्ते इत्थंवेदाप्रामाण्यवादिनस्तव तमएवस्यादित्यर्थः ॥ ४८२ ॥ तस्मात्परोदीरितार्थ

स्यबहुधाविरुद्धत्वात् । उक्तोर्थः सर्वस्यभगवदधीनत्वरूपार्थः । अन्यः सर्वस्यब्रह्मात्मकत्वरूपः । अनर्थः श्रुत्यप्रामाण्याद्यनर्थ संपादकः ॥ ४८३ ॥ पुरुषएवेदंसर्वमितिवाक्यस्यप्रकारांतरेणाप्यर्थंवक्तुंपीठिकामारचयति ॥ व्यत्यासइति ॥ यःव्यासः यद न्नेनातिरोहतीत्यत्रविद्यमाना मन्नेनेतितृतीयां द्वितीयार्थे द्वितीयाविभक्त्यर्थे मर्त्यमन्नंयदत्यगादितिभागवतवाक्येनैतद्वाक्यव्या ख्यानरूपेण अन्वशिक्षत तस्यव्यासस्येतिसंबंधः । विभक्तीनांव्यत्यासः एकविभक्तौविभक्त्यंतरमित्यर्थः । अन्नेनेतितृतीयाया

व्यत्यासश्चविभक्तीनांवेदव्यासस्यसंमतः ॥ अन्नेनेतितृतीयांयोद्वितीयार्थेन्वाशि
क्षत ॥ ४८४ ॥ अतःपुरुषएवेतिप्रथमा पंचमीयदा ॥ सदासर्वनिमित्तत्वमाहिमा
पुंसिवर्ण्यते ॥ ४८५ ॥ यदातुसप्तमी सर्वाधारत्वंवर्णयेत्तदा ॥ ४८६ ॥ सूक्तस्यैका
र्थताचैवंसत्येवस्यान्नचान्यथा ॥ यतस्सर्वजगत्कर्तापुरुषस्सोत्रकीर्त्यते ॥ ४८७ ॥

अन्नमितिद्वितीयाविभक्त्यर्थत्वकथनेनार्थानुपपत्तौवेदेविभक्तिव्यत्यासोपिव्यासस्यसंमतइतिभावः । व्यासस्येत्युपलक्षणं । सुपां सुलुगित्यादिवचनात्पाणिन्यादीनामपीतिद्रष्टव्यं ॥ ४८४ ॥ पीठिकारचनयालब्धमर्थमाह ॥ अतइति ॥ अतः वेदेविभक्ति व्यत्यासस्यापिप्रामाणिकत्वात् । पंचमी पुरुषादितिनिमित्तपंचमीविभक्त्यर्थभूता ॥ ४८५ ॥ सप्तमी पुरुषे इत्याधारसप्तमीवि भक्त्यर्थभूता ॥ ४८६ ॥ आपातप्रतीतपरकीयार्थेबाधकांतरंचसूचयन्नुक्तरीत्याविभक्तिव्यत्यासेनार्थकथनमेवन्याय्यमित्याह



॥ सूक्तस्येति ॥ एवंसत्येव विभक्तिव्यत्यासेनार्थकथनेसत्येव एकार्थता पूर्वोत्तराविरुद्धैकप्रकारार्थता । पूर्वोत्तरवाक्योक्तमहि मवत्अस्मिन्नपिवाक्येसर्वकर्तृत्वसर्वाधारत्वादिमहिमलाभादित्यर्थः । अन्यथा विभक्तिव्यत्यासंविनाऽऽपातप्रतीतार्थकथने । तथा चपरकीयार्थेवाक्यभेदोपिदोषइतिभावः । एकार्थतामेवलेशतोदर्शयति ॥ यतइति ॥ अत्र पुरुषएवेदंसर्वमितिवाक्ये ॥४८७॥ किंचपुरुषइतिप्रथमायास्सप्तम्यर्थतामंगीकृत्यार्थकथनमेवात्रोचितमितिसाहित्यमुद्रयाह ॥ अपीति ॥ भिक्षाटनं कारकांतराद्वि भक्त्यंतरं । अन्यत्रतुप्रसिद्धएवार्थः । ज्ञातीन् वाक्यतयास्वसमानजातीयपूर्वोत्तरवाक्यानि । ऐक्यार्थकथनेपूर्वोत्तरवाक्यानांम

अपिभिक्षाटनंकृत्वाज्ञातीन्रक्षितुमर्हति ॥ यदियंभारतीभीमसेनदर्शितपद्धतिः ॥ ४८८ ॥
नचेत्कथमभेदार्थायतोवाक्यंभिनत्तिसा ॥ संभवत्येकवाक्यत्वेवाक्यभेदोहिदूषणं ॥ ४८९ ॥

हिमप्रतिपादकानांअप्रामाण्याख्यनाशप्रसंगात् विभक्त्यंतराश्रयणेतुसर्वेषामेकवाक्यतयाप्रामाण्यप्रतिघातेनरक्षणादितिभावः । यद्यस्मात् । इयं पुरुषसूक्ताख्याश्रुतिर्भारती ब्राह्मीतुभारतीभाषेत्यनुशासनात्भारतीपदवाच्या । अन्यत्रतुभरतकुलोत्पन्नभार तपदवाच्यभीमसेनपत्नीद्रौपदी । भीमसेनदर्शितपद्धतिः भीमसेनेनदर्शितापद्धतिर्यस्यास्सा । भीमसेनमार्गमनुसृत्यवर्तमानेत्यर्थः । भीमसेनोहिएकचक्रानगरेभिक्षाटनंकृत्वाधर्मराजादीन्स्वज्ञातीनरक्षत् । इयमपिभारतीपदवाच्यत्वाद्भारत्यभिमन्यमानत्वाच्च स्वप तिवत्कारकांतराद्विभक्त्यंतरगवेषणंकृत्वापिस्वपूर्वोत्तरवाक्यरक्षणमेवकर्तुमर्हतीतिभावः ॥४८८॥ अभेदार्थत्वेदोषांतरंचाह ॥ नचे

युक्ति- दिति ॥ यतःयस्मा त्सा अभेदार्थत्वेनपरेणाभिमन्यमानावाक् । वाक्यं पूर्वोत्तरवाक्यं भिनत्ति भिन्नार्थकंकरोति । मल्लिका
पूर्वोत्तरवाक्येषुभेदकथनात्अत्रचाभेदकथनात्कथमभेदार्था । अभेदार्थाहिवाक्सर्वत्रभेदंनिवारयेत् । इयंतुवाक्यभेदमेवसाध शुद्धिसौ०
॥ ७७ ॥ यंतीकथमभेदार्थेतिविरोधाख्यएकोदोषः । सकलवाक्यसाधारणंदूषणांतरंचाह ॥ संभवतीति ॥ ४८९ ॥ पुनरपिदोषांतर
माह ॥ जडात्मेति ॥ मुख्यार्थः असंकुचितत्वेनसर्वपदमुख्यार्थःजडाजडसकलपदमुख्यार्थः । याच्ञायां मुख्यवृत्त्यसंभवेना
मुख्यवृत्तेराश्रयणे । सदन्नं पूर्वोत्तरवाक्याविघातकत्वेन सुपांसुलुगित्यनुशिष्टत्वेनचविभक्त्यंतराश्रयणरूपसदन्नं । परेणक्रिय

जडात्मैक्यंप्रसंगेनमुख्यार्थस्तुतवापिन ॥ याच्ञायांतुप्रवृत्तेनसदन्नंकिंनयाच्यते ॥ ४९० ॥
किंचपौरुषसूक्तेस्मिन्सर्वस्यपुरुषात्मता ॥ यद्यर्थस्तर्हिकार्यार्थैर्व्यर्थंतेनतदर्थनं ॥ ४९१ ॥
काभूःकुतोभरस्तस्याःकस्स्वयंकश्चपूरुषः ॥ एतावदपिसूक्तार्थंध्याताधातानवेत्तिकिं ॥ ४९२ ॥

माणयाच्ञातु पूर्वोत्तरवाक्यविघातुकत्वेनाननुशिष्टत्वेनचकदन्नयाच्ञेतिभावः ॥ ४९० ॥ अपिचपुरुषएवेदंसर्वमितिवाक्यस्यसकलचेतनानांपुरुषनामकनारायणाभिन्नार्थकत्वेब्रह्मादिभिश्श्वेतद्वीपंगत्वाऽनेनसूक्तेनविष्णोरुपासनंकृतमितियापौराणिकीप्रक्रियासाप्यनुपपन्नेत्याह ॥ किंचेति ॥ तेनपुरुषसूक्तेन । तदर्थनं तस्यविष्णोरर्थनमुपासनं व्यर्थं विरुद्धार्थकं विगतार्थकंच । ब्रह्मादीनांस्वेषामपिपुरुषरूपत्वेभेदसापेक्षोपास्योपासकभावायोगात् । स्वैरपिभूभारच्छेदस्यकर्तुंशक्यत्वेनान्यप्रार्थनेवैयर्थ्याच्चेतिभावः ॥ ४९१ ॥ एतदेवदर्शयति ॥ काभूरिति ॥ भूः धरादेवी । स्वयंब्रह्म । ध्यातापुरुषसूक्तार्थध्यानकर्ता । धाताब्रह्मा । सूक्तार्थ

भूतं एतावत् काभूःकुतोभरःकस्स्वयंकश्चपुरुषइत्येतावत्प्रमेयंनवेत्तिकिमितिसंबंधः ॥ ४९२ ॥ कुतोनवेत्तीत्यतआह ॥ पुरुषा दिति ॥ पुरुषा दैत्यरूपनारायणा त्पुरुषस्यैव धरारूपनारायणस्यैव पुरुषः ब्रह्मरूपनारायणः पुरुषपूजनं विष्णुरूपनारायणपू जनं कस्मात्कारणात्कुरुते नकुर्यादेव । सर्वस्यचेतनवर्गस्यनारायणरूपत्वे कथंभुवोभारः कथंचदैत्यानांभूभारहेतुत्वं कथंचवि ष्णोःपूज्यत्वं ब्रह्मणश्चपूजकत्वं । नहिस्वस्यैवस्वस्माद्भारेसति स्वयमेवस्वपूजनंकरोतीतिकोपिप्रेक्षावान्मन्यतइतिभावः । तस्मा त्परोदीरितार्थस्यातिविरुद्धत्वात् ॥ ४९३ ॥ व्यावहारिकभेदस्यविद्यमानत्वादियंसर्वापिव्यवस्थाघटतइतिपरहृदयमुद्धाव्यदूष

पुरुषात्पुरुषस्यैवभयेपुरुषपूजनं ॥ पुरुषःकुरुतेकस्मात्तस्मादस्मन्मतंस्मर ॥ ४९३ ॥ व्यावहा
रिकभेदाच्चेत्तर्हिकार्यानुरोधिनः ॥ तस्यानुकूलमेवार्थंवक्तिसूक्तंनवैरिणं ॥ ४९४ ॥ अंततः
परमार्थश्चसएवस्याद्धिकार्यकृत् ॥ सर्वैक्यंसर्वकार्याणांभंजकंकस्यरंजकं ॥ ४९५ ॥ ॥

यति ॥ व्यावहारिकभेदादिति ॥ कार्यानुरोधिनः उक्तव्यवस्थाघटकस्य तस्यभेदस्य । अनुकूलं सप्तमीविभक्त्याश्रयणेनभे दानुकूलमाधाराधेयभावरूपमर्थमेववक्ति । वैरिण मुक्तव्यवहारविरोधिनंसर्वचेतनाभेदं । नहिधनिनःप्रार्थनार्थंगतोदरिद्रःअह मेवधनीतिब्रूते ॥ ४९४ ॥ नन्वस्तुतर्हिभेदएवास्मिन्वाक्येप्रतिपाद्योर्थः । तस्यपरमार्थताकथमित्यतआह ॥ अंततइति ॥ का र्यकृत् अपेक्षितसकलार्थक्रियाकारी । सएव उक्तभेदएव परमार्थः अबाध्यार्थः । भंजकंविरोधि । कस्यकार्यस्य रंजकं नक

स्यापि । अर्थक्रियानुपयोगीत्यर्थः । श्रुत्युक्तस्यास्यैवभेदस्यार्थक्रियाकारित्वात् अन्वयेनब्रह्मवत् व्यतिरेकेणशुक्तिरूप्यवच्च पारमार्थिकत्वमपिसिद्ध्येत् । अर्थक्रियानुपयोगिनस्त्वदभिलषितैक्यस्यचशुक्तिरूप्यवन्मिथ्यात्वंचसिद्ध्येत् । अबाध्यत्वयोग्यस्यबाध्यतांवदन्बाध्यत्वयोग्यस्यचाबाध्यतांचवदन्भवांश्चव्याहतभाषीभवेदितिभावः ॥ ४९५ ॥ किंच तत्वज्ञानोपयोगिनोगुरुशिष्यभावस्य शास्त्रतत्वयोर्बोध्यबोधकभावस्यच फलत्वोपयोगिनोर्मुमुक्षुमोक्षयोस्साध्यसाधकभावस्य सर्वापेक्षितवर्णाश्रमविभेदस्य शून्यब्रह्मविभेदस्यच घातकमैक्यमेवप्रेक्षावद्भिरुपेक्ष्यमित्याह ॥ बोध्यत्वमित्यादिना ॥ बोध्यत्वंप्रतिपाद्यत्वं बोधकत्वं

बोध्यत्वंबोधकत्वंचसाध्यसाधकतांतथा ॥ गुरुंशिष्यंचयद्धंतितन्नहंतीतिहिकःपुमान् ॥ ४९६ ॥
वर्णाश्रमविभेदस्यशून्याशून्यव्यवस्थितेः ॥ साधकःपरमार्थोर्थोबाधकोर्थस्तुबाध्यते ॥ ४९७ ॥
यदिसर्वैक्यमर्थोनवाक्यंस्यात्तर्ह्यनर्थकं ॥ गौणार्थानुसृतौविष्णोस्स्वातंत्र्याख्यगुणंवदेत् ॥ ४९८ ॥

प्रतिपादकत्वं । साध्योमोक्ष स्साधकोमुमुक्षुः । यत् ऐक्यंहंति तदितिसंबंधः ॥ ४९६ ॥ अशून्यंब्रह्म । ततःकिमित्यतआह ॥ साधकइति ॥ साधक स्सकलार्थक्रियाकारीभेदः । बाधक स्सकलव्यवहारविरोध्यभेदः । साधकइत्युपलक्षणं । विद्ययाह्यविद्यानिवृत्तिस्साध्या । साध्यसाधनभावश्चभेदघटितइतिमुक्तिकालीनइत्यपिद्रष्टव्यं ॥ ४९७ ॥ दोषांतरंचाह ॥ यदीति ॥ अर्थः पुरुषएवेदंसर्वमितिवाक्यार्थः । अनर्थकं मुख्यार्थविधुरं । गौणार्थानुसृतौ मुख्यार्थमभेदंविहाय पुरुषव्यतिरेकेणासत्त्व



मित्याद्यमुख्यार्थानुसरणे । अमुख्यत्वाविशेषात्राजाराष्ट्रमितिवत्पुरुषाधीनंसर्वमित्यर्थस्यैवपूर्वोत्तराविरुद्धत्वेनवक्तुंशक्यत्वात् विष्णोस्स्वातंत्र्याख्यगुणंवदेदितियोजना ॥ ४९८ ॥ ननुसर्वशब्दस्यसंकोचंकृत्वाचैतन्यैक्यमेवोच्यते । अतोनामुख्यार्थतेत्यतआह ॥ संकोचेपीति ॥ गर्हावाचिनाऽपिपदेनसंकोचस्यैवदोषत्वंसूचयति । अस्मिन्पक्षेऽभेदाख्यमुख्यार्थलाभेपि सर्वपदस्य संकोचेनामुख्यार्थताऽपरिहारात् । दोषांतरंचस्पष्टमाह ॥ अल्पजडतइति ॥ तत्रहेतुमाह ॥ इदंपदार्थइति ॥ यद्यस्मात्ते मते जडःजडएवेदंपदार्थः । जीवः अनिदंपदः अनिदमितिपदंयस्येत्यनिदंपदः । तस्मादल्पजडतइतिपूर्वेणान्वयः । सर्वपदसं

संकोचेप्यल्पजडतःस्यादैक्यंनतुजीवतः ॥ इदंपदार्थोहिजडोयत्तेजीवोनिदंपदः ॥ ४९९ ॥
तत्पूर्वस्वोत्तरार्थघ्नंस्वोपस्थात्रर्थघातकं ॥ अयुक्तंचजडाद्यैक्यमुक्तंचेत्सूक्ततैवन ॥ ५०० ॥
विशिष्टचिद्बिबाहुल्यात्सर्वस्यान्नतदैक्यवत् ॥ चिन्मात्रमबहुत्वात्तेनसर्वाख्यंयदैक्यवत् ॥ ५०१ ॥

कोचेपीदंपदमहिम्नापरिदृश्यमानाल्पजडतएवैक्यंस्यात् । नतुत्वदभिलषितजीवैक्यमितिभावः ॥ ४९९ ॥ उक्तमर्थमुपसंहरति ॥ तदिति ॥ तत्तस्मात् । पूर्वोक्तप्रकारात् । पूर्वस्वोत्तरार्थघ्नं स्वस्मात्पूर्वोक्तसहस्रशीर्षत्वाद्यर्थानां मुक्तेशत्वाद्युत्तरार्थानांचनाशकं । स्वोपस्थात्रर्थघातकं स्वेनोपस्थानंकुर्वतस्स्वोपस्थातारोब्रह्माद्याः । तेषामर्थस्यप्रयोजनस्यघातकं । जडाद्यैक्य मिदंपदमहिम्नाप्राप्तजडाद्यैक्यं । सुष्ठूक्तंवचनंहिसूक्तं । तस्यभावस्सूक्तता । ऐक्यार्थकथनेसूक्तस्यदुरुक्ततैवस्यादितिभावः ॥ ५०० ॥ इदंपदमनादृत्यसर्वपदसंकोचेनजीववाचित्वांगीकारेपिदूषणमाह ॥ विशिष्टेति ॥ हियस्मात् । विशिष्टचि दंतःकरणाद्युपाधि

युक्ति- विशिष्टचित् । बाहुल्याद्बहुसंख्याकत्वात् । सर्वं सर्वपदार्थः । जडात्सर्वपदस्यसंकोचेपिबहुष्वेवसर्वपदप्रयोगःकर्तव्यः । नत्वे मल्लिका

॥ ७९ ॥ कस्मिन् । तच्चविशिष्टचैतन्यात्मकजीववाचित्वएवघटतइतिभावः । तद्विशिष्टचैतन्यं ऐक्यवन्न । विशिष्टचैतन्यैक्यस्यपरेणा शुद्धिसौ०

नंगीकारात् । य दविशिष्टचैतन्यमैक्यव त्तच्चिन्मात्रं अबहुत्वादेकत्वाद्भेदकोपाध्यभावेभेदानंगीकारादितिभावः । सर्वाख्यं सर्व पदप्रतिपाद्यं सर्वपदार्थइतियावत् । यत्रसर्वपदस्यसंभवस्तत्रैक्यासंभवः । यत्रचैक्यस्यसंभवस्तत्रसर्वपदासंभवः । ततश्चैकंसंधि त्सतोपरंप्रच्यवतइतिन्यायाख्यपंकेपतितोसीतिभावः ॥ ५०१ ॥ स्वमतेपक्षांतरंचाह ॥ अथवेति ॥ एतद्वाक्यमैक्यपरमस्त्वि

अथवैक्यपरंवाक्यमेतदस्तुनमेभयं ॥ तन्मुख्यार्थंचयुक्तंचयथास्यात्तांकथांशृणु ॥ ५०२ ॥
असंख्यदेहिदेहेषुसोत्यतिष्ठद्दशांगुलं ॥ इतिपूर्वंश्रुतौपुंसोरूपबाहुल्यमीरितं ॥ ५०३ ॥
प्रादेशगात्रतोक्त्यैषांप्रोक्तामध्यममानता ॥ तत्तदंगुलिमानानांप्रोक्ताचाल्पाल्पमानता ॥ ५०४ ॥

तिसंबंधः । त दैक्यपरंपुरुषएवेदंसर्वमितिवाक्यं । तांकथां भगवत्येवभेदशंकामापाद्यतन्निरासपरतयाकथ्यमानांकथां ॥ ५०२ ॥ पूर्वंश्रुतौअत्यतिष्ठद्दशांगुलमितिश्रुतौ । सः सहस्रशीर्षत्वादिनापूर्वोक्तःपुरुषः । असंख्यदेहिदेहेष्विति केचित्स्वदेहांतर्हृदयावका शेप्रादेशमात्रंपुरुषंवसंतमितिश्रुतिसमाख्ययोपात्तं । अत्यतिष्ठत् जीवादतिशयितत्वेनातिष्ठदिति पुंसोरूपबाहुल्यं रूपानंत्यमीरि ॥ २१४ ॥ तमितिसंबंधः । तेनतेषांभगवद्रूपाणामानंत्यात्स्थानभेदाच्चभेदप्रसक्तिरितिभावः ॥५०३॥ प्रकारांतरेणभेदप्रसक्तिंदर्शयति ॥ प्रादे

शेति ॥ एषारूपाणां मध्यममानता मध्यमप्रमाणताप्रोक्ता । इतोपिव्याप्तरूपाद्भेदप्रसक्तिरितिभावः । प्रकारांतरेणापि भेदप्रसक्तिमाह ॥ तत्तदिति ॥ तेषांदेवानां तेषांमनुष्यादीनांचां गुलिभिर्मानंप्रमाणंयेषांतानि तेषांभगवद्रूपाणा मल्पाल्पमानता देवांगुलीनांस्थूलत्वा न्मनुष्यांगुलीनामल्पत्वात् तत्तदंगुलिभिर्दशांगुलत्वाच्चाल्पाल्पप्रमाणताप्रोक्तेतियोजना । ततोपिरूपाणांपरस्परंभेदप्राप्तिरितिभावः ॥ ५०४ ॥ उक्तंसंगृह्याह ॥ स्थानभेदेनेति ॥ पूर्वोक्तव्याप्तपुरुषात् सहस्रशीर्षेति सभूमिंविश्वतोवृत्त्वेतिपूर्वोक्तव्याप्तपुरुषादित्यर्थः । रूपाणां देहांतर्यामिरूपाणां भेदशंकिनीश्रुतिः । उपलक्षणंचैतत् । मिथोभेदशंकिनी

स्थानभेदेनरूपानंत्याचात्यल्पप्रमाणतः ॥ पूर्वोक्तव्याप्तपुरुषाद्रूपाणांभेदशंकिनी ॥ ५०५ ॥ श्रुतिःपुरुषएवेदंसर्वंरूपकदंबकं ॥ इत्यभिन्नत्वमाहैषांप्राक्स्वोक्तव्याप्तपूरुषात् ॥५०६॥ भेदा भेदादिशंकायावारणायावधारणं ॥ ५०७ ॥ आविर्भावात्तिरोभावाद्भूतंभव्यंभवच्चतत् ॥ भूतभव्यभवद्देहेयद्रूपंपरमात्मनः ॥ ५०८ ॥

त्यपिद्रष्टव्यं । इदं पूर्वश्रुतौप्रस्तावितं । सर्वमित्यस्यविवरणंरूपकदंबकमिति । एषांभगवद्रूपाणां ॥ ५०५ ॥ ५०६ ॥ अवधारणं पुरुषएवेत्यवधारणं । भेदाभेदादिशंकायाः अंशांशिभावेनप्राप्तभेदाभेदशंकायाः । आदिपदेनांशिरूपादंशरूपाणामल्पशक्तित्वादिशंकायाश्चवारणाय प्रयुक्तमित्यर्थः ॥ ५०७ ॥ उक्तभगवद्रूपाणांभूतत्वंवर्तमानत्वंभव्यत्वंचोपपादयति ॥ आविर्भावादिति ॥ भूतभव्यभवद्देहे । जात्येकवचनमिदं । अतीतवर्तमानानागतदेहेष्वित्यर्थः । परमात्मनोयद्रूपं । यानिरूपाणीत्यर्थः ।

तद्रूपं । वर्तमानरूपेष्वाविर्भावात् । भविष्यद्रूपेष्वतीतरूपेषुचेदानींतिरोभावादितिविवेकः । यद्यपिश्रुतौभूतभव्ययोरेवग्रहणं । तथाप्येतच्छ्रुतिव्याख्यानरूपे सर्वंपुरुषएवेदंभूतंभव्यंभवच्चयदितिभागवतवाक्ये भवदितिवर्तमानस्यापिग्रहणात्तस्याप्युपपादनमितिद्रष्टव्यं ॥ ५०८ ॥ सर्वं भेदाभावेपितिरोहितत्वाविर्भूतत्वाल्पपरिमाणत्वैकत्वानेकत्वावयवावयविभावादिकंसमस्तं । एवमिदानीमुक्तप्रकारेण । पूर्वोत्तराविरुद्धः पूर्वत्रोत्तरत्रचोक्तार्थाविरुद्धइत्यर्थः । उपलक्षणंचैतत् । पूर्वोत्तरोक्तभगवद्रूपेषुप्राप्तभेदशंकानिरासकत्वेनतत्संगतश्चेत्यपिद्रष्टव्यं ॥ ५०९ ॥ इदमनिदंपदार्थाभेदरूपत्वात्स्वतश्चव्याहतइत्यर्थः ॥ ५१० ॥ तदेवविश

विशेषशक्त्यासर्वंवचनिर्वोढुंशक्यतेकिल ॥ पूर्वोत्तरविरुद्धोर्थश्श्रुतेरेवंभवेन्मम
॥ ५०९ ॥ पूर्वोत्तरविरुद्धार्थस्स्वतश्चव्याहतस्तव ॥ ५१० ॥ स्थानस्थानित्वकथना
ज्ज्यायस्त्वेशत्वकीर्तनात् ॥ जडार्थस्यापिसर्वत्वात्कथमैक्यार्थतावद ॥ ५११ ॥

दयति ॥ स्थानेति ॥ सभूमिंविश्वतोवृत्वेति अत्यतिष्ठद्दशांगुलमितिचभूम्यादीनांस्थानत्वकथनात् ब्रह्मणश्चस्थानित्वकथनादित्यर्थः । अनेनैक्यार्थेपूर्वविरोधोदर्शितः । ज्यायस्त्वेशत्वकीर्तनादित्यनेनोत्तरविरोधः । जडार्थस्यापिसर्वत्वादित्यनेनस्वविरोधश्चदर्शितः । उपलक्षणंचैतद्व्याख्यानंव्याख्यानांतरस्य । सहस्रशीर्षेतिपूर्ववाक्येसहस्रंशीर्षाणियस्येत्यादिनाबहुव्रीहिसमासाश्रय ॥ २१५ ॥
णाद्भगवदवयवानांभगवतश्चप्राप्तभेदशंकाया उत्तरत्रचमुखंकिमस्येतिवाक्येऽस्येतिषष्ठ्यर्थतयाप्राप्तभगदवयवभेदशंकायाश्चनिरा

सार्थमिदमुक्तवक्ष्यमाणकरचरणादिकंसर्वंपुरुषएवेतिभगवदवयवानांभगवतश्चात्यंताभेदपरमिदंवाक्यं । अवयवावयविभावेनप्राप्तभेदाभेदशंकानिरासार्थमेवकारश्चेत्यपिश्रुतेरर्थोद्रष्टव्यः । अवयवानामपिभूतभविष्यत्त्वादिकं कदाचित्सहस्रशीर्षत्वादिनाविर्भावात्कदाचित्तस्यैवतिरोभावाच्चपूर्ववदेवयोजनीयं । अस्मिन्नेवसूक्तेप्रस्तुतभगवद्रूपादिपरत्वादिदंशब्दोस्माकमेवशोभते । परस्यतुपरिदृश्यमानप्रमाणांतरप्राप्तबहिरंगजगत्परत्वान्नतथाशोभते । अतोपीदमेवव्याख्यानमादरणीयं ॥ ५११ ॥ अभेदखंडनस्यभेदसौरभएवकर्तव्यत्वात् अस्यचशुद्धिसौरभत्वादुपरम्यतइत्याह ॥ भेदसौरभेति ॥ अस्यार्थस्याभेदखंडनरूपस्यार्थस्य ।

भेदसौरभसर्वस्वेस्यादस्यार्थस्यविस्तृतिः ॥ शुद्ध्युद्धारेतदुद्धारस्त्वन्योन्यमतिमिश्रणात् ॥ ५१२ ॥
अतोविचारवातोयंसौरभेसौरभांतरं ॥ संयोजयतित(द्गंध)द्गंधस्सोयंजनमनोहरः ॥ ५१३ ॥
तथापितत्तदर्थस्यतत्रतत्रविशेषतः ॥ विचारणात्सौरभाणांसर्वस्वंभातिपंचधा ॥ ५१४ ॥ ॥

तर्ह्येतावदपिकुतोत्रचर्चितमित्यतआह ॥ शुद्ध्युद्धारइति ॥ शुद्ध्युद्धारेशुद्धिसौरभे तदुद्धार स्तस्यभेदस्योद्धारस्समर्थनं । अतिमिश्रणाद्भगवद्गुणानामेकीभूतत्वात् ॥ ५१२ ॥ अतोभगवद्गुणानामन्योन्यमप्येकीभूतत्वात् । विचारवातः विचाराख्यवायुः । सौरभेऽन्यसौरभे । सौरभांतरं सौरभांतरप्रमेयं क्वचित्क्वचित्प्रसंगात्स्पृशतीतिभावः । सौरभसंयोजनंवायोरेवधर्मइत्यतो विचारवातइत्युक्तं । तत्तस्मान्मिश्रणात् ॥ ५१३ ॥ तर्हिसौरभभेदःकिंनिमित्तइत्यतआह ॥ तथापीति ॥ ५१४ ॥

युक्ति- ॥ ८१ ॥

सामान्यतउपरितनसूक्तभागस्याप्यर्थंवक्तुं तंयज्ञंबर्हिषिप्रौक्षन्नितिवाक्यस्यसूक्तप्रतिपाद्यमहापुरुषार्थतांनिवारयितुंतावदर्थमाह ॥ अग्रतोजातेति ॥ अग्रतोजातपुरुषमिति पुरुषंजातमग्रतइत्यस्यार्थकथनं । अग्रतःइंद्रादिभ्योग्रतः । नतुसर्वेषामग्रतः । आदिपुरुषजातविराट्पुरुषजातत्वकथनादस्यपुरुषस्य । ननुतमितिआदिपुरुषस्यैवकुतोनपरामर्शइतिचेन्न । सन्निहिताधिपुरुषपरित्यागेनव्यवहितमहापुरुषपरामर्शेकारणाभावात् । सकइत्यतआह ॥ रुद्रमिति ॥ महापुरुषपुत्रविराट्पुरुषजातत्वकथनात् । शंभोःपितामहोब्रह्मपिताशक्राद्यधीश्वरइतिवासुदेवसहस्रनामसमाख्यया यस्याद्यआसीद्गुणविग्रहोमहान्विज्ञानधिष्ण्योभगवानजःकि

अग्रतोजातपुरुषंरुद्रंपशुपतिंपुरा ॥ देवास्सर्वेपियजनयोग्यत्वाद्यज्ञनामकं ॥ प्रौक्षन्बर्हिषियूपेतमबध्नन्पुरुषंपशुं ॥ ५१५ ॥ देवाःपुरुषमेधेनतेनयज्ञेनसर्वशः ॥ अयजन्यज्ञपुरुषंपूज्यत्वाद्यज्ञनामकं ॥ ५१६ ॥ ॥

ल । यत्संभवोहमितिभागवतोक्तरुद्रवाक्यसमाख्ययाच रुद्रस्यैवात्रप्राप्तेः । युक्त्यंतरंचसूचयति ॥ पशुपतिमिति ॥ पशूनांपतिरितिहिपशुपतिशब्दार्थः । सचादिकालीनदेवयज्ञेप्राथमिकपशुत्वएवसंभवतिनान्यथाऽतोप्ययंरुद्रएव । तर्ह्यस्यपुरुषपशोर्यज्ञनाम कथमित्यतआह ॥ यजनेति ॥ इज्यतेऽनेनेतिव्युत्पत्त्यायज्ञइत्यर्थः । प्रौक्षन्प्रोक्षणंकृतवंतः । यूपेतमित्यादिना अबध्नन्पुरुषंपशुमित्यस्यवाक्यस्यदूरस्थस्यापिसंगतत्वादर्थकथनं । तत्रस्पष्टंपुरुषंपशुमितिपुरुषस्यपशुत्वकथनात् अत्रापिपुरुषपशुरेवगृह्यते । नत्वादिपुरुषः ॥ ५१५ ॥ यज्ञेनयज्ञमित्यस्यार्थमाह ॥ देवाइति ॥ तेनपुरुषमेधेनयज्ञेन पुरुषमेधाख्ययज्ञेनेत्यर्थः । यज्ञ

मल्लिका शुद्धिसौ०

॥ २१६ ॥

मित्यस्यार्थः ॥ यज्ञपुरुषमिति ॥ इदमुक्तंभवति । रुद्राख्यपुरुषपशुंबर्हिषिप्रोक्ष्ययूपेबध्वातेनपशुनायज्ञनामकंमहापुरुषमयजं तेति । इज्यतइतिव्युत्पत्त्यायज्ञाख्यकर्मणा पूज्यत्वाद्यज्ञनामकमित्यर्थः ॥ ५१६ ॥ अबध्नन्पुरुषंपशुमित्यत्र यःपशुःबंधनयोग्य त्वात्बध्योवक्ष्यते । तस्यैव हविःपुंसः यज्ञहवीरूपपुंसः तमित्यनेनोक्तिः परामर्शः । हियस्मात्सएवप्रोक्ष्यः । बंधनप्रोक्षणयो रेकाधिकरणत्वनियमात् । इयमपि तमित्यत्रोक्तपुरुषस्यपशुपुरुषत्वेयुक्तिः । तेन तेनदेवाअयजंतेतिवाक्यं तस्मात्तस्याद्यज्ञात्सर्व हुतइत्यादिग्रंथश्च अत्रसूक्ते पुंस्तुतिः महापुरुषस्यस्तुतिः ॥ ५१७ ॥ नन्वेकप्रकरणपठितवाक्यानांकुतोविभज्यार्थकथनमित्यत

तमित्युक्तिर्हविःपुंसोयोबध्योवक्ष्यतेपशुः ॥ सहिप्रोक्ष्य स्तेन तस्मा दित्यादिश्चात्रपुंस्तुतिः ॥ ५१७ ॥ ज्यायस्त्वं महिमा व्याप्ति रमृतत्वेशतादिकं ॥ नहिबध्यपशोर्देवस्रष्टृंगत्वंतादिज्यता ॥५१८॥ अकेनसर्वथाशून्यंनिर्दुःखंमो क्षमेवहि ॥ नाकाभिधंप्रापुरंतेनाकिप्राप्यस्सएवहि ॥ नाको न्यस्यतुनाकस्यसिद्धत्वात्पूर्वमप्यलं ॥ ५१९ ॥

आह ॥ ज्यायस्त्वमिति ॥ अमृतत्वस्येशता अमृतत्वेशता । एतदादिकं पूर्ववाक्योक्तंप्रमेयं । तथोत्तरवाक्योक्तं देवस्रष्टृंगत्वं देवानामिंद्राग्न्यादीनां स्रष्टृण्यंगानियस्यसः तस्यभावस्तत्त्वं । तदिज्यता तैर्देवैःकृताइज्यायस्यसःतदिज्यस्तस्यभावस्तदिज्यता । साचवध्यपशोर्नहि । अतःपूर्ववाक्योक्तोपिमहापुरुषएव । उत्तरवाक्योक्तोपिसएव । तमितिमध्यवाक्येयज्ञपशुरितिविभज्यकथ नमितिभावः ॥ ५१८ ॥ तेहनाकमित्यत्रोक्तनाकपदस्यस्वर्गपरतांनिवारयितुंयोगलब्धार्थमाह ॥ अकेनेति ॥ कंसुखं तद्विरुद्ध मकंदुःखं तेनसर्वथाशून्यं । नञ्द्वयार्थकथनं ॥ सर्वथेति ॥ तस्यैवस्पष्टीकरणं ॥ निर्दुःखमिति ॥ अतएवनाकाभिधं मोक्ष

मंतेप्रापुरितिसंबंधः । नाकपदार्थपर्यालोचनायामत्रोक्तनाकोमोक्षएवभवेदितिभावः ॥ युक्त्यंतरंचाह ॥ नाकिप्राप्यइति ॥ हियस्मात्समोक्षाख्योनाकएवनाकिप्राप्यः । तस्माच्चनाकाभिधमितिपूर्वेणान्वयः । नाकस्यप्राक्सिद्धतांद्योतयितुंदेवेत्यनुक्त्वाना कीत्युक्तं । नाकीत्यत्रसूचितांयुक्तिंस्पष्टमाह ॥ अन्यस्येति ॥ पूर्वमप्यलंसम्यक्सिद्धत्वादितिसंबंधः । नहिप्राक्सिद्धस्यैवकर्म साध्यतापियुक्तेतिभावः ॥ ५१९ ॥ युक्त्यंतरंचाह ॥ पूर्वमिति ॥ पूर्वमुक्ताइति पूर्वेइत्यस्यार्थकथनं । इदानींपदस्थदेवेभ्यःपू र्वदेवानांपूर्वत्वंमुक्तत्वमादायैवपर्यवस्यति । नह्येतेषांपूर्वेतेसंसारिणइतिवक्तुंयुक्तमितिभावः । देवाइतिचविशेष्यग्रहणेन साध्याः

पूर्वंमुक्तायत्रसंतिदेवाःकिलसहस्रशः ॥ तैस्सहैवस्थितिर्मोक्षेदेवानांनापरत्रहि
॥ ५२० ॥ यंधाताप्याहवेदाहंमहांतंपुरुषंत्विति ॥ आदित्यवर्णस्सकिलतमसः
पारएवहि ॥ सदातिष्ठतितेनासौनित्यमुक्तःपरःप्रभुः ॥ ५२१ ॥ ॥

साध्यनामकाइतितद्विशेषणमपिगृहीतप्रायंद्रष्टव्यं । तैःपूर्वैस्साध्यदेवैस्सहदेवानामितरदेवानांस्थितिर्मोक्षएव नापरत्रस्वर्गेहीति योजना । पूर्वेषांदेवानामिदानींतनदेवानांचस्वर्गेसहवासायोगादितिभावः ॥ ५२० ॥ विष्णोरेवपुरुषसूक्तप्रतिपाद्यत्वेपुनरपियु क्तीर्वदंस्तस्यैवपरब्रह्मत्वमपिततएवलब्धमित्याह ॥ यंधातेत्यादिना ॥ धातापुरस्ताद्यमुदाजहारेतिउत्तरवाक्यपर्यालोचनया वेदाहमितिपूर्ववाक्यस्यापिधातृवाक्यत्वंसिद्धमित्याशयेनोक्तंयंधाताप्याहेति । सःब्रह्मवेद्यःपुरुषः आदित्यवर्णस्संस्तमसःपारएव तिष्ठतिहि । किलेत्यनेनास्यार्थस्यश्रुत्यंतरप्रसिद्धतामपिसूचयति । अनेन आदित्यवर्णंतमसस्तुपारइतिश्रुतिर्व्याख्यातावेदितव्या।

अधिकरणत्वोक्त्यातिष्ठतीत्यपिसिद्धं । तेन तमःपदवाच्यप्रकृतिपारस्थितत्वकथनेना सौपरःप्रभुर्नित्यमुक्तः । पारेऽवस्थानस्यतु शब्देनविशेषणात्कदाचित्पारगेभ्योमुक्तेभ्योपिविशिष्यपारगत्वरूपनित्यमुक्तत्वसिद्धिरितिभावः ॥ ५२१ ॥ प्रकारांतरेणापिवि ष्णोर्नित्यमुक्ततांपरब्रह्मतांचसाधयति ॥ यइति ॥ यःपरमपुरुषः स्वावयवतः स्वमुखाद्यवयवेभ्यः । अनेन मुखादिंद्रश्चाग्निश्चे त्यादिवाक्यार्थउक्तोभवति । स्वहृदिस्थितान्सर्ववेदांश्चप्रोक्तवानित्यनेन ऋचस्सामानिजज्ञिरइत्यादेरर्थउक्तोभवति । हृदिस्थिता नित्यनेनवेदानांप्रलयेप्यविलुप्तत्वंसूचयति ॥ ५२२ ॥ उक्तवाक्यतात्पर्यलब्धमर्थमाह ॥ योगुरुरित्यादिना ॥ चराचरजगत्क

यस्स्वावयवतोदेवानिंद्राग्निप्राणपूर्वकान् ॥ असृज त्सर्ववेदांश्चप्रोक्तवान्स्वहृदिस्थितान् ॥ ५२२ ॥
योगुरुस्सर्वदेवानांपिताचप्रभुरेवच ॥ चराचरजगत्कर्तादेवाराध्यपदांबुजः ॥ ५२३ ॥ देवानाम
पिकैवल्यदाताधातुश्चयोमहान् ॥ नित्यमुक्तश्चभगवान्परंब्रह्मसएवहि ॥ ५२४ ॥ ॥

र्तेत्यनेन तस्माद्श्वाअजायंतेत्यादे र्नाभ्याआसीदंतरिक्षमित्यादेश्चार्थउक्तोभवति । देवाराध्यपदांबुजः देवानामपिकैवल्यदातेत्य नेन यज्ञेनयज्ञमजंतेत्यृचस्तात्पर्यार्थकथनं । धातुश्चयोमहानित्यनेन वेदाहमितिवाक्येऽहमितिवदतोब्रह्मणएवसनिधानात् मह त्त्वावधित्वलाभइतिसूचयति । सएव एवंपूर्वोक्तएव । तस्माद्विराळजायतेत्यादिना ब्रह्मादिसकलजगतस्सृष्टिकथनात्परमपुरुष स्यतदकथनात्पुनर्भवाख्यसंसारशून्यत्वेननित्यमुक्तत्वलाभः । जन्माद्यस्ययतइतिसूत्रोक्तपरब्रह्मलक्षणस्य जगज्जन्मादिकर्तृत्व

स्यैतत्सूक्तप्रतिपाद्यपरमपुरुषेपिश्रवणात् अस्यैवपरब्रह्मत्वसिद्धिः । एवंब्रह्मगुरुत्वादिविशेषणानामपि संसारिषुब्रह्मादिष्वघटितानां जगद्व्यापारवर्जमितिसूत्रार्थपर्यालोचनयामुक्तेष्वपितेष्वघटितानां परमपुरुषेस्मिन्कथनादस्यैवनित्यमुक्तत्वपरब्रह्मत्वयोस्सिद्धिरि तिद्रष्टव्यं ॥ ५२३ ॥ ५२४ ॥ विष्णोरेवपुरुषसूक्तप्रतिपाद्यत्वेऽतरंगमतिप्रबलंयुक्त्यंतरमाह ॥ श्रीश्चेति ॥ यद्यस्मात् । तस्य पुरुषसूक्तप्रतिपाद्यमहापुरुषस्य सूक्तांते यजुर्वेदिनांपुरुषसूक्तांते श्रीश्चतेलक्ष्मीश्चपत्न्याविति वाक्ये । भागवते तत्रगत्वाजगन्नाथ

श्रीश्चलक्ष्मीश्चयत्पत्न्यौसूक्तांतेतस्यकीर्तिते ॥ अतःपुरुषसूक्तोक्तस्साक्षान्नारायणःप्रभुः ॥ स्पष्टंभाग वतेचोक्तापुंसूक्तेविष्णुसूक्तता ॥ ५२५ ॥ तस्मादजायतविराडितियःपुंसुतोविराट् ॥ सहस्रशीर्षोपि पुमानसावेवकिलाद्भुतं ॥ ५२६ ॥ इत्थंसूक्तोक्तमहिमायस्यसर्वेश्वरस्यहि ॥ परंब्रह्मसएवैकोनाराय णइतिस्थितं ॥ ५२७ ॥ तमुक्तविधयाविद्वान्मुक्तस्स्यान्नान्यथाकिल ॥ अतोमुमुक्षुभिर्ज्ञेयमिदंब्रह्मन चापरं ॥ ५२८ ॥ मुक्तावनुपयोग्यन्यद्ब्रह्मयद्यस्तितत्तव ॥ तमोजिगमिषोर्मुक्तियोग्यानामिदमेवनः ॥ ५२९ ॥

मितिप्रागुक्तवाक्ये ॥ ५२५ ॥ पुरुषसूक्तस्यविराट्पुरुषोदेवतेतिवदतांदूषणमाह ॥ तस्मादिति ॥ पुंसुतः सहस्रशीर्षाख्यपुरुष सुतः योविराट् असावेव सहस्रशीर्षापिकिल । सूक्तदेवतात्वेतस्यैवसहस्रशीर्षपुरुषत्वस्याप्यापातात् । तच्च स्वस्यैवजनकत्वंजन्य त्वंचेतिविरुद्धमितिसूचनायाद्भुतमित्युक्तं ॥ ५२६ ॥ ५२७ ॥ तमुक्तविधयेत्यनेन तमेवंविद्वानित्यस्यार्थउक्तः । अन्यथानकि लेत्यनेन नान्यःपंथाइत्यादेरर्थोद्रष्टव्यः । अतः मुक्तिदायकत्वात् ॥ ५२८ ॥ मुक्तावनुपयोग्यन्यन्निर्गुणंब्रह्मयद्यस्ति तत्तवैव । 

यद्यस्तीत्यनेन तस्याश्रौतत्वेनाप्रामाणिकत्वंसूचयति । मुक्तावनुपयोगीत्यनेन विष्णोरन्यस्यशिवादेस्शैवादिभिर्ब्रह्मतयाऽभिम न्यमानस्यापि नान्यःपंथाइतिमोक्षोपयोगित्वनिषेधात्अब्रह्मतैवेतिसूचयति । अयनायनेतिनिषेधा त्तमोजिगिमिषोरित्युक्तं । इदं मोक्षदायकत्वेनोक्तंविष्ण्वाख्यंब्रह्म ॥ ५२९ ॥ उक्तमेवविवेचयति ॥ साकारेति ॥ एवमितिपूर्वोक्तसकलप्रकारपरामर्शा त्सहस्रशीर्षत्वाद्याकारस्यज्यायस्त्वादिगुणानांचसाक्षान्मोक्षांगत्वश्रवणात् ब्रह्मवत्पारमार्थ्यं तदभिन्नत्वं निष्प्रकारकज्ञानान्मोक्षो

साकारसगुणश्रीशसेवै(वा)काऽमृतपद्धतिः ॥ नान्यस्यसेवामोक्षस्यपंथाइत्याहहिश्रुतिः ॥ ५२९ ॥ अतोमुकुंदादितरद्ब्रह्मवेदविनिंदितं ॥ मोक्षेंतरंगहेतुत्वान्मुख्यंब्रह्मसएवहि ॥ ५३१ ॥ वादिरा जाख्ययतिनासाधितायुक्तिमल्लिका ॥ शुद्धिसौरभसर्वस्वमद्धाविष्णोर्न्यवेदयत् ॥ ५३२ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वादिराजपूज्यचरणविरचितायांयुक्तिमल्लिकायांशुद्धिसौरभंसंपूर्णं ॥

नेतिचसिद्धमितिसूचयितुंसाकारेत्याद्युक्तं । अन्यस्य निर्गुणस्यशिवादेश्च ॥ ५३० ॥ अतः विष्णोरन्यस्यमोक्षानुपयोगित्वकथ नात् । सएव मुकुंदएवहि ॥ ५३१ ॥ अद्धा अंजसा । शिष्टंपूर्ववदेवयोजनीयं ॥ ॥ इतिश्रीमत्कविकुलतिलकश्री मद्वादिराजतीर्थचरणारविंदचंचरीकसुरोत्तमभिक्षुविरचितायांयुक्तिमल्लिकाटीकायांभावविलासिन्यांद्वितीयं शुद्धिसौरभसर्वस्वंसंपूर्णं ॥ २ ॥ ॥ ॥ ॥ ॥

